# गयाश्राद्धादिपद्धतिः ।

कलिकाता गवर्णमेण्ट संस्कृतविद्यामन्दिराध्यापक

श्री तारानाथ तर्कवाचस्पति भट्टाचार्य्य

विरचिता

कलिकाताराजधान्याम् ।

वि· पि· एम्स् यन्त्रे मुद्रिता

१८७२

# गयाश्राद्धादिपद्धतिः।



अशेषसन्तापनिवारणाय वेदैकगम्यं जगदेकवन्द्यम्।
गदाधरं तं पुरुषार्थहेतुं स्मरामि संसारपयोधिसेतुम् ॥१॥
पुत्रादिभिः कृतं यस्यां श्राद्धं श्रद्धासमन्वितम्।
पित्राद्युद्धारफलदं तां गयां मनसा भजे ॥ २ ॥
त्रिस्थलीसेतुमालोक्य श्राद्धकल्पादिपद्धतीः।
दृष्ट्वा च तन्यते यत्नाद्गयाश्राद्धादिपद्धतिः ॥ ३ ॥
श्राद्धादिमन्त्रान् वेदेभ्य उद्धृत्य व्याख्ययान्वितान्।
कृत्वैषा मुद्रिता यत्ने श्रीतारानाथशर्म्मणा ॥ ४ ॥
प्रमाणं प्रायशो नोक्तं मूलग्रन्थे हि तत् स्थितम्।
प्रयोगमात्रमुद्दिष्टं सुबोधाय नृणां मया ॥ ५ ॥

पुत्त्रादित्यक्तद्रव्यभोगेन तृप्यन्तो विशिष्टफलप्रदा इत्येव कल्पनीयम्। किन्तु सर्व्वो हि लोकः सफले कर्म्मण्येव प्रवर्त्तते नाफले॥ तत्र यज्ञादौ यथा देवानां फलदातृत्वमेवं श्राद्धदेवानां पित्रादीनां फलदातृत्वे सम्भवत्येव श्राद्धस्य सफलत्वं भवेत्तदेव नोपपद्यते। तथाहि इन्द्रादयो हि देवाश्चेतना विशिष्टज्ञानक्रियाशक्तिमन्तो मन्त्रमात्राहूताः शक्तिविशेषेण यज्ञदेशे आविर्भवितुं शक्नुवन्ति आविर्भूय च यज्ञदत्तद्रव्यदर्शनमात्रेण तृप्यन्तो विशिष्टफलदानाय समर्थाः। नैवं पित्रादयो भवितुमर्हन्ति। ते हि स्वस्वकर्म्मानुसारेण नानायोनिगततया अतिविप्रकृष्टदेशस्थिताः विशिष्टशक्तिरहिताश्च कथं मन्त्रमात्राहूताः श्राद्धदेशे आगच्छेयुः। आगता वा कुतो न दृश्येयुः देवानामिव तेषामतीन्द्रियत्वाभावात् दर्शनमात्रेण तृप्तेरभावाच्च। भोजनेनैव तेषां तृप्तिसम्भवाच्च भोजनमन्तरेण कथं तृप्येयुः। अतृप्ताश्च कुतो वा फलं दद्युः। पश्वादिगता वा कुतो विशिष्टफलप्रदाः स्युः। अपरञ्च इह दत्तस्य चान्नादेरचेतनतया नेतृपुरुषाभावेनान्यत्र गमनासम्भवः। श्राद्धदत्तद्रव्यस्य यथापूर्व्वमवस्थानान्न भोक्तृदेशगमनमित्यनुमीयते। एवमिह दत्तेनान्नेनान्यत्र स्थितानां भोगस्तु नैव सम्भवो। पात्रीयब्राह्मणेन श्राद्धान्नस्य भोजनान्न पित्रादितृप्तिसम्भवः भोगतृप्त्योः सामानाधिकरण्यनियमात्। किञ्च,

देवयोनिगतानाममृतान्धसां मानुषयोग्यान्नेन कथं तृप्तिः कथं वा पशुयोनिगतानां तृणाहारयोग्यानां तेन तृप्तिः। तेषां पश्वादिभावमापेदुषां फलदातृत्वासम्भवस्तु विशिष्टशक्तेरभावात् सर्व्वानुभवसिद्धः। एतेन

यथा गोषु प्रनष्टो वै वत्सो विन्दति मातरम्।
एवं श्राद्धेऽन्नमुद्दिष्टं मन्त्रः प्रापयते पितॄन्।
नामगोत्रं पितॄणान्तु प्रापकं हव्यकव्ययोः।
नाममन्त्रैस्तथोद्देशो भवान्तरगतानपि।
प्राणिनः प्रीणयन्त्येते तदाहारत्वमागता इति।
देवो यदि पिता जातः शुभकर्म्मानुसारतः।
श्राद्धान्नममृतं भूत्वा देवत्वेऽप्यनुगच्छति।
दैत्यत्वे भोग्यरूपेण पशुत्वे च तृणं भवेत्।
श्राद्धान्नं वायुरूपेण नागत्वेऽप्यनुगच्छति।
पानं भवति यक्षत्वे गृध्रत्वे च तथामिषम्।
दनुजत्वे तथा मांसं प्रेतत्वे रुधिरोदकम्।
मानुषत्वेऽन्नपानादि नानाभोगरसं तथेति च

हेमाद्रिश्राद्धकल्पादिधृतमार्कण्डेयवचनैरिह दत्तान्नादेरेव मन्त्रशक्त्या विप्रकृष्टदेशनयनं पितृप्राप्तयोनियोग्यामृतादिरूपेण परिणामश्च कल्प्यते इत्यपि न विचारचारु अचेतनानामपि मन्त्राणां चेतनधर्म्मकल्पनापि तदैव साधीयसी स्यात् यदि दत्तान्नादेरिह यथापूर्व्वमवस्थितिर्न स्यात् स्याच्च पूर्व्वरूपान्यथाभावः। तथा च एव-

मादिवचनानां स्तुत्यर्थवादपरताया अग्रे दर्शयिष्य-
माणत्वान्नाधिककल्पना।

किञ्च पात्रब्राह्मणेन भोगादिना विनष्टस्य वस्तुनः कथं
स्थानान्तरनयनं कथं वा तत्तदाहारतारूपेण परिणामः
धर्म्मिणि सत्येव स्थानान्तरगमनादिसम्भवो न विनष्टस्यातः
श्राद्धस्य कथं प्रयोजनवत्त्वमित्येवं स्थिते।

उच्यते। ब्राह्मणादिसम्प्रदानक्रियाया इव श्राद्ध-
कर्म्मण एव स्वजन्यपुण्यद्वारा विशिष्टफलजनकता तत्र च
कालान्तरभावितत्तत्फलदानाय तत्कर्म्मसाक्षिणः परमे-
श्वरस्यैव तत्साधनत्वम्। अतएव भगवद्गीतायाम्

यो यो यां यां तनुं भक्तः श्रद्धयार्च्चितुमिच्छति।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्।
स तया श्रद्धया युक्तस्तस्याराधनमीहते।
लभते च ततः कामान् मयैव विहितान् हि तान् इति

भक्तानां तत्तदिष्टोत्पादनस्य स्वकर्त्तृकत्वं भगवतोक्तम्।
युक्तञ्चैतत् श्रुतिस्मृत्योरीश्वराज्ञास्वरूपतया तत्तदर्थानु-
ष्ठानेन तदाज्ञाप्रतिपालने ईश्वरस्य सम्माननारूपा तृप्ति-
स्ततश्चाभीष्टलाभः। तथैवोक्तं गीतायाम्

स्वे स्वे कर्म्मण्यभिरतः संसिद्धिं लभते नरः।
स्वकर्म्मनिरतः सिद्धिं यथा विन्दति तच्छृणु।
यतो प्रवृत्तिर्भूतानां येन सर्व्वमिदं ततम्।
स्वकर्म्मणा तमभ्यर्च्च्य सिद्धिं विन्दति मानव इति।

(स्वकर्म्मणा) स्वस्ववर्णाश्रमविहितकर्म्मानुष्ठानेन, (तम्) परमेश्वरम् (अभ्यर्च्च्य) तदाज्ञाप्रतिपालनेन सम्मान्य तत्सम्माननेन च तत्कृतां (सिद्धिम्) तत्तदभीष्टसिद्धिं (लभते) इति तदर्थः। अस्मिन् पक्षे च पित्रादीनां श्राद्धान्नादेर्वा न स्थानान्तरगमनकल्पना। अथ वा देवदत्तादिशब्दस्य यथा न केवलं देहमात्रं, न वा जीवमात्रमर्थः किन्तु तत्तद्देहाभिमानी जीव एवार्थः। तथा पित्रादिशब्दस्य उत्पादकदेहाभिमानी केवलं जीवोऽपि नार्थः किन्तु वसुरुद्रादित्यदेवाधिष्ठिततादृशजीव एवार्थः,

वसवः पितरो ज्ञेया रुद्रा ज्ञेयाः पितामहाः।
प्रपितामहास्त्वादित्याः श्रुतिरेषा सनातनी।
प्रेतानुद्दिश्य यत् कर्म्म क्रियते मानुषैरिह।
तुष्यन्ति देवतास्तेन न प्रेताः पितरः स्मृताः।

इति श्राद्धकल्पधृतदेवलवचने पित्रादिपदानां पारिभाषिकत्वोक्तेः। (प्रेताः) मृताः (न पितरः) न केवलाः पितृपदाभिधेयाः किन्तु तदधिष्ठितवसव एव पितृपदाभिधेयास्त एव तुष्यन्तीत्यर्थः। अतएव श्राद्धकाले पित्रादीनां तेन तेन रूपेण ध्येयताऽग्रेऽभिधास्यमानोपपद्यते। एवञ्च वस्वादिदेवानामिन्द्रादिवत् विशिष्टशक्तिज्ञानसम्पन्नतया मन्त्रमात्रावाहने यागादाविन्द्रादिवदागमनसम्भवाच्च त्यक्तद्रव्यदर्शनमात्रेण तृप्तिः,

न वै देवा अश्नन्ति पिबन्ति एतदेवामृतं दृष्ट्वा तृप्यन्तीति छान्दोग्यवाक्यात् । अतएव भगवद्गीतायाम्

सह यज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ।
देवान् भावयतानेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथेति ।

प्रजाकृतयज्ञेन तृप्तानां देवानां यजमानफलदातृत्वम् प्रजाः प्रति प्रजापतिवचनत्वेनोक्तम् । अनेन ( यज्ञेन ) ( देवान् ) (भावयत) ( तर्पयत ) (ते) च यज्ञतर्पिता देवाः ( वः ) युष्मान् ( भावयन्तु ) तर्पयन्त्वित्यर्थः । यज्ञपदञ्च कर्म्ममात्रोपलक्षणम् । एवञ्च यथा काचित् गर्भिणी सुहृदा दत्तं दोहदं भुञ्जाना स्वयं तृप्यति स्वाश्रयं गर्भञ्च तर्पयन्ती दोहददातारमप्युपकरोति तथा वस्वादयोऽपि श्राद्धान्नदर्शनमात्रतृप्ताः स्वाधिष्ठितपित्रादिपुरुषान् तर्पयन्तः श्राद्धकर्त्तुरपीष्टदातारो भवन्ति । प्रागुक्तवचनजातेष्वपि मन्त्रशक्त्यान्नादेर्देशान्तरनयनकथनमपि स्वस्वकर्म्मानुसारेण पश्वादिभावापन्नपित्रादीनां तदुपभोगयोग्यान्नादितुल्यतृप्तिर्वस्वादिकृता तद्दिने भवतीत्येतत्परत्वश्राद्धप्रशंसापरत्वयोः कल्पने न तद्वैयर्थ्यम् । यत्र च काश्यादिमरणेन पित्रादीनां मुक्तत्वम् तत्र वस्वादिमात्रस्यैव तृप्तिर्न विशिष्टस्य, विशेषणस्यासत्त्वे विशेष्यस्यैव विशिष्टकार्य्यकारित्वात् कुण्डलविशिष्टस्य नरस्य

कुण्डलापगमेऽपि मनुष्यकर्म्मकारित्वाव्याहतिवत्। तथा च त एव तृप्ता विशिष्टफलं दद्युरिति सिद्धा श्राद्धस्यार्थ-वत्त्वोपपत्तिः।

एवं श्राद्धस्य सफलत्वे समर्थिते तत्फलविशेषाः श्राद्ध-कल्पादौ दर्शिता अभिधीयन्ते। तत्रैव व्यासः

श्राद्धात् परतरं नास्ति श्रेयस्करमुदाहृतम्।
तस्मात् सर्व्वप्रयत्नेन श्राद्धं कुर्य्याद्विचक्षणः।

देवलोऽपि।

अरोगी प्रकृतिस्थश्च चिरायुः पुत्त्रपौत्त्रवान्।
अर्थवानर्थभोजी च श्राद्धकारी भवेदिह।
परत्र च परां तुष्टिं लोकांश्च विविधान् शुभान्।
श्राद्धकृत् समवाप्नोति यशश्च विपुलं नर इति।

मार्कण्डेयः।

पिता पितामहश्चैव तथैव प्रपितामहः।
पिण्डसम्बन्धिनो ह्येते विज्ञेयाः पुरुषास्त्रयः।
लेपसंबन्धिनश्चान्ये पितामहपितामहात्।
प्रभृत्युक्तास्त्रयस्तेषां यजमानश्च सप्तमः।
तथान्ये पूर्व्वजाः स्वर्गे ये चान्ये नरकौकसः।
ये च तिर्य्यक्त्वमापन्ना ये च भूतादिसंस्थिताः।
तान् सर्व्वान् यजमानो वै श्राद्धं कुर्व्वन् यथाविधि।
समाप्याययते तान् स येन येन शृणुष्व तत्।
अन्नविक्षेपणं यत्तु मनुष्यैः क्रियते भुवि।

तेन तृप्तिमुपायान्ति ये पिशाचत्वमागताः।
यदम्बु स्नानवस्त्रोत्थं भूमौ पतति पुत्रक!।
तेन ये तरुतां प्राप्तास्तेषां तृप्तिः प्रजायते।
यास्तु गन्धादिकणिकाः पतन्ति धरणीतले।
ताभिराप्यायनं तेषां ये देवत्वं कुले गताः।
उद्धृतेषु च पिण्डेषु याश्चान्नकणिका भुवि।
ताभिराप्यायनं तेषां ये तिर्य्यक्त्वं कुले गताः।
ये चादन्ताः कुले बालाः क्रियाऽयोग्यास्त्वसंस्कृताः।
विपन्नास्ते तु विकिरसंमार्ज्जनजलाशिनः।
भुक्तान्नाचमनं यच्च जलं यदङ्घ्रिसेचने।
ब्राह्मणानां तथैवान्ये तेन तृप्तिं प्रयान्ति वै।
तेनानेककुले तत्र तत्तद्योन्यन्तरं गताः।
प्रयान्त्याप्यायनं वत्स! सम्यक् श्राद्धक्रियावताम्॥
यथा गोष्वित्यादि (५ पृ०) पूर्व्ववत्।

एवं श्राद्धस्य फलविशेषे स्थिते इदानीम् गयाश्राद्ध-फलं किंनिष्ठमिति, विवेच्यते। "यन्नाम्ना पातयेत् पिण्ड"-मित्यादिवचनजातात् पुत्रादिकृतश्राद्धात् तदुद्देश्य-पित्रादिगतं नरकनिवृत्तिब्रह्मलोकवाप्त्यादिफलमव-गम्यते तच्च नोपपद्यते। तथा हि सर्व्वो हि लोकः स्वेष्ट-साधने कर्मणि प्रवर्त्तते तत्प्रवृत्त्या च तत्तदिष्टसाधनं वस्तु साधयति इत्येवं नियमे स्थिते वैदिककर्म्मण्यपि तथैव स्वाभीष्टफलवत्येव प्रवृत्तिरुचिता नान्यगामिफले।

एवं शास्त्रदेशितं फलमनुष्ठातर्य्येव कर्म्मभिर्ज्जन्यते "शास्त्रीयं फलं प्रयोक्तरि तल्लक्षणत्वादिति" जैमिनीयन्यायात्। अन्यकर्त्तृकक्रिययाऽन्यदीय-फलजननेऽतिप्रसङ्गः स्यात्। ततश्च पुत्त्रादिकृतश्राद्धात् कथं पित्रादेरुद्धारादिसम्भवः तस्य श्राद्धाद्यकर्त्तृत्वात् इत्येवं प्राप्ते उच्यते।

यस्मिन् जाते एतामिष्टिं निर्वपति पूत एव सः इत्यादिवेदवचनात् जैमिनीयन्यायस्य जातेष्ट्यादिभिन्न-विषयत्वं यथा कल्प्यते। तथा च पित्त्रादिकृतजाते-ष्ट्यादिद्वारा अन्नाशनादिसंस्कारद्वारा च यथा तत्रा-ऽकर्त्तर्य्यपि पुत्त्रे फलमुत्पद्यते एवं गयादिश्राद्धकर्त्तुरुद्देश्य-स्याकर्त्तुरपि उद्धारादिफलसम्बन्धः नानापुराणवचन-बलादपि सम्भवति

फलसंयोगस्त्वचोदिते न स्यादशेषभूतत्वादिति जैमिनीयन्यायान्तरेण विधिविशेषेणैव फलविशेष-सम्बन्ध इत्युक्तत्वात्। तथा च प्रागुक्तातिप्रसङ्गस्य शास्त्रातिरिक्तविषयत्वमिति कल्प्यते "नास्ति वचनस्यातिभार" इति न्यायात् "वाचनिकेऽर्थे न्यायानवतारा"-दिति न्यायाच्च। तत्र वचनाच्चोभयगतफलसाधनताऽवगता जातेष्ट्यादिवत्।

तच्च फलं पुण्यविशेषस्तज्जन्यनरकाद्युद्धारो वेत्यन्य-देतत्। मीमांसादाववैतद्विवेचितमित्युपरम्यते। काम्यादि

स्तपितृकगयाश्राद्धस्य तु कर्त्तव्यैवाकरणनिबन्धनप्रत्यवायपरिहारमात्रं सति कामे विशिष्टसन्तानश्च फलम्

गयायां पिण्डदानेन पितॄणामनृणो भवेत्

इत्यादिवचने पितृणापाकरणस्यावश्यकतया तदकरणे प्रत्यवायबोधनात्

गयाभिगमनं कर्त्तुं यः शक्तो नाभिगच्छति।
शोचन्ति पितरस्तस्य वृथा तस्य परिश्रम इति

कूर्मपुराणीयेन समर्थस्य गयाऽकरणे वृथाजन्मतोक्तेः

जीवतोर्वाक्यकरणात् प्रत्यब्दं भूरिभोजनात्।
गयायां पिण्डदानाच्च त्रिभिः पुत्त्रस्य पुत्त्रता।

इत्यादिवचने गयाश्रादिकरणेनैव पुत्त्रकार्य्यकारितया पुत्त्रत्वसिद्धुरक्तेश्च। तेन गयाश्राद्धं नित्यमत एव यथाशक्ति अनुष्ठेयं "नित्ये यथा शक्नुयादिति" न्यायात्। तथापि सकृत्करणमेव नित्यं तावतैव शास्त्रार्थसिद्धेः "सकृत्कृते कृतः शास्त्रार्थ इति" न्यायात् आवृत्तिबोधकवीप्साद्यभावाच्च जन्मतिथ्यादिवन्न पुनःकरणावश्यकता। पुनः करणे तु फलाधिक्यं "यो भूय आरभते तस्य फले विशेष" इति न्यायात्

सकृद्गयाभिगमनं सकृत्पिण्डप्रपातनम्

इत्यादिवाक्यमप्याद्यस्यैवावश्यकत्वार्थं न तु द्वितीयादेर्निरासार्थमपि, परिसंख्यापत्तेः। तत्रापि प्रथमयात्रायां येषां प्रेतत्वनिवारणार्थं प्रेतशिलायां पिण्डदानभाण्ड-

स्फोटने कृते तत्र द्वितीययात्रायां तेषां ते न कार्य्या इत्येव विशेषः। प्रथमयात्रानन्तरकृतानान्तु द्वितीययात्रायां ते अपि कार्य्याः। अन्यत् सर्व्वं सर्व्वास्वपि यात्रासु समानम्।

तस्मादमुक्ते पित्रादौ नरकोद्धारादि यथायथं फलं मुक्ते तु तस्मिन् पुत्त्रादेः प्रत्यवायाभावः सत्याञ्च कामनायां विशिष्टसन्तानादि पुत्त्रादिगतं फलं भवतीति सिद्धम्।

अत्रेदं विविच्यते। प्रागुक्तपुराणादिवचनेषु गयाश्राद्धस्य पित्राद्युद्धारः प्रत्यवायपरिहारः पुत्त्रावाप्तिश्च फलत्वेन श्रूयते तत्र गयाश्राद्धप्रवृत्तौ किं प्रयोजकं किमेकैकमुभयं वा त्रितयं वेति सन्देहे त्रितयस्यैव प्रयोजकता तत्र कामनाभेदादेकस्य मुख्यफलताऽपरयोर्द्वारिता प्रासङ्गिकता वा तथाच यदा पित्राद्युद्धरार्थिना गयाश्राद्धं क्रियते तदा तदेव मुख्यं फलं तत्प्रवृत्तौ प्रयोजकं प्रत्यवायपरिहारः पुत्त्रोत्पत्तिश्च तत्र प्रासङ्गिकौ आन्यार्थदीपस्यानुद्देश्यप्रकाशनवत्। यदा तु पुत्रार्थिना तदनुष्ठीयते तदा पुत्त्रोत्पत्तिरेव मुख्यं फलं पित्राद्युद्धारस्तु तत्र द्वारमित्येव सिद्धान्तः।

एवं पित्त्रादुद्धारस्य फलत्वे स्थितेऽधुना तत्रेदं विचार्य्यते। उद्धारो नाम स्वापेक्षयोत्कृष्टस्थानादिनयनं तच्च प्रकृते नारकीयदेहविगमानन्तरं देवादिदेहप्राप्तिरूपं तच्च न सम्भवति नारकीयादि देहादेः स्वस्व-

कर्म्मणारब्धतया कारणसत्त्वे विगमासम्भवात् तत् कर्म्मणां च भोगेनैव नाश्यत्वात्

नाभुक्तं क्षीयते कर्म्म कल्पकोटिशतैरपीति

इत्याद्यागमात् । ततश्च तद्देहनाशः स्वारम्भककर्म्मनाश एव नान्यथा । तथाच गयाश्राद्धादिना कथमुद्धारसम्भवः ।

प्रारब्धकर्म्मणाञ्च भोगादेव क्षये सति गयाश्राद्धेनोद्धारो जननीय इति कल्पनापि न युक्ता भोगादेव कर्म्मक्षये कल्पेऽत्र गयाश्राद्धवैफल्यापत्तेः । इत्येवं स्थिते

उच्यते कर्म्मविपाकोक्तदानादिना प्रारब्धकर्म्मक्षयद्वारा यथा रोगनाशकल्पना तथा प्रकृतेऽपि गयाश्राद्धादिना प्रारब्धक्षयनाशद्वारैव उद्धारकल्पना "नाभुक्तं क्षीयते" इत्यादिवाक्यस्य तु बलवद्वाचनिकप्रतिबन्धकाभाव एव प्रवृत्तेः प्रकृते च बलवद्वाक्यस्यैव प्रतिबन्धकस्य सत्त्वेनाप्रवृत्तेः "न हि वचनस्यातिभार इति" न्यायात् तथा च गयाश्राद्धस्यैव प्रारब्धक्षयजनकपुण्यविशेषजनकता कर्म्मविपाकोक्तदानादिवदेव कल्प्यते इति न कश्चिद्विरोधः ।

किञ्च भोगादेव प्रारब्धकर्म्मक्षयादनन्तरमुद्धारकल्पनेऽपि न गयाश्राद्धवैफल्यं पापविशेषैरेकैकयोनिष्वनेकावृत्तिश्रवणात् फलोन्मुखानामितरेषामनारब्धफलानां कर्म्मणाञ्च गयाश्राद्धनाश्यता भविष्यतीति ।

असति च नारकीयाङ्गाद्यारम्भके पापे उद्धारस्य ब्रह्मलोकावाप्तिरूपतैव। स्वकर्म्मानुसारेण तल्लोकप्राप्तेरपि पूर्व्वं हृत्तले तु पुत्त्रनिष्ठः प्रत्यवायपरिहार एव फलं मुक्तपित्त्रादौ तथाकल्पनस्य पूर्व्वमुक्तत्वात् तथैवात्र कल्पनौचित्यात्।

अथ गयाश्राद्धाधिकारिणः। तत्र पुत्त्रपौत्त्रप्रपौत्त्रा एव प्रधानाधिकारिणः। तद्भिन्नाः सर्व्वेऽपि गौणाधिकारिणः। तथा.

पुत्त्रेषु विद्यमानेषु नान्यो वै कारयेत् स्वधाद् इत्यादिवचनेन पुत्त्रसत्त्वेऽन्यकर्त्तृकश्राद्धस्य निषेधेऽपि गयायां तस्य प्रतिप्रसवः,

आत्मजो वाऽन्यजो वापि गयाकूपे यदा तदा।
यन्नाम्ना पातयेत् पिण्डं तं नयेद् ब्रह्म शाश्वतमिति
वायवीयवचनात्
सवर्णा ज्ञातयो मित्रबान्धवाः सुहृदस्तथा।
तेऽपि भूयो गयां गत्वा पिण्डं दद्युर्विधानत इति
स्मृतिरत्नावलीवाक्याच्च। तथाचात्र सम्बन्धिमात्राणामधिकारः। यो यदीयधनं यथा कथञ्चिद्गृह्णाति सोऽसवर्णोऽपि तदीयगयाश्राद्धेऽधिकारी, "प्रेतः कश्चिद्विमुक्त्यर्थ"मित्यादि वायवीयवचनेऽसवर्णवणिग्दत्तपिण्डेन प्रेतोद्धारस्य कीर्त्तनात्

पुत्त्रो वा बन्धुपुत्त्रो वा मित्रं वा स्वजनोऽपि वा।

ऋणिको वाथवा दद्यात् द्वयोः स्वर्गस्तदा तयोरिति वह्निपुराणीयाच्च।

तथान्यत्र कर्त्तृविशेषविषयनिषेधोऽपि गयायां न प्रवर्त्तते

न पुत्त्रेभ्यः पिता दद्यान्नानुजेभ्यस्तदाग्रजः।

न पत्न्यै तु पतिर्द्दद्यात् बुद्धिमान् सुसमाहितः।

इति च सामान्यतो निषिध्य

तेऽपि यान्ति दिवं सर्व्वे पिण्डे दत्ते इति श्रुतिः।

अतस्तेभ्योऽत्र यत्नेन पिण्डं दद्यात् समाहित इति।

स्मृतिरत्नावल्यां गयायां प्रतिप्रसवात् बौधायनेनापि

पित्रा श्राद्धं न कर्त्तव्यं पुत्त्राणान्तु कदाचन।

भ्रात्राग्रजेन वा कार्य्यं भ्रातॄणां न कनीयसाम्।

अतिस्नेहेन कार्य्यं वा सपिण्डीकरणं विना।

गयायामविशेषेण ज्यायानपि समाचरेदिति

सामान्यतो निषिध्य गयायां प्रतिप्रसवात्। पूर्व्ववचने अत्रेति गयायामित्यर्थः।

अथ गयाश्राद्धानधिकारिणः। जीवत्पितृको जीवन्मातृकश्च गयाश्राद्धे सर्व्वथानधिकारी। जीवत् पितृको मृतमातृकस्तु यदि प्रसङ्गेन गयां प्राप्नोति तदा अन्वष्टकाश्राद्धमिव मातृपार्व्वणमेव कुर्य्यात्।

आन्वष्टक्यं गयाप्राप्तौ सत्यां यच्च क्षयाहनि।

मातुः श्राद्धं सुतः कुर्य्यात् पितर्य्यपि च जीवतीति

मैत्रायणीय परिशिष्टवाक्यात्। अत्र प्राप्ताविन्युक्त्या प्रासङ्गिकगमनं सूचितम्

गयां प्रसङ्गतो गत्वा मातृश्राद्धं समाचरेदिति

त्रिस्थलीसेतुधृतवचने प्रसङ्गत इति पदस्य स्पष्टोपादानस्वरसात्। तेन जीवत्पितृकस्य गयामुद्दिश्य गमने न मातृश्राद्धकरणम्। मातृश्राद्धस्यान्वष्टकाश्राद्धसाहचर्य्यात् पार्व्वणमेव कार्य्यमिति त्रिस्थलीसेतुप्रभृतयः। अन्ये तु जीवन्मातृको मृतमातृको वा जीवत्पितृकोऽपि पार्व्वणविधिना पितामहादीनां गयाश्राद्धं कुर्य्यात्

जीवे पितरि वै पुत्रः श्राद्धकार्य्यं विवर्ज्जयेत्।

येषां वापि पिता दद्यात्तेषामेके प्रचक्षते इति

हारीतवचनोत्तरार्द्धेन जीवत्पितृकपार्व्वणस्य विधानेन गयायामपि तत् प्रवृत्तेरित्याहुः। आचार एवात्रान्यतरपक्षग्रहणे शरणम्।

संन्यासिनस्तु सर्व्वकर्म्मपरित्यागितया गयाश्राद्धेऽनधिकारिणः। तथापि तत्र विष्णुपदादिश्राद्धस्थानेषु दण्डमात्रस्पर्शनं प्रणवोपासनादिवत् तैराचरणीयं न तु श्राद्धतर्पणादि।

दण्डं प्रदर्शयेद्भिक्षुर्गयां गत्वा न पिण्डदः।

दण्डं स्पृष्ट्वा विष्णुपदे पितृभिः सह मुच्यते।

इति वायवीयात् स्पृष्ट्वा स्पर्शयित्वेत्यर्थः। पुत्त्रवत्याः

स्त्रिया नाधिकार इति गौड़ैकदेशिनामाचारः स तु मूलाभावान्नादरणीयः।

अथ गयाश्राद्धकालः। न तत्र कालशुद्ध्यपेक्षा

गयायां सर्व्वकालेषु पिण्डं दद्यात् विचक्षणः।

अधिमासे जन्मदिने अस्ते च गुरुशुक्रयोः।

न त्यक्तव्यं गयाश्राद्धं सिंहस्थे च बृहस्पताविति

वायवीयात्। अत्र सर्व्वकालेष्वित्युपक्रमात् अस्ते इत्याद्युक्तिस्तु सर्व्वसमयाशुद्धिप्रयोजकनिमित्तमात्रोपलक्षणार्था न तु रात्र्यादिपर्य्युदस्तकालग्रहणार्थेति बोध्यं सर्व्वत्र तीर्थादौ रात्र्यादिकालस्य पर्य्युदस्ततया रघुनन्दनादिभिः स्वीकारात्।

संक्रान्त्यादौ तु फलातिशयः

गयाश्राद्धं प्रकुर्व्वीत संक्रान्त्यादौ विशेषतः।

काले वापरपक्षे वा चतुर्थ्यादितिथिष्वपीति

वह्निपुराणीयात्

मकरे वर्त्तमानेऽर्के ग्रहणे चन्द्रसूर्य्ययोः।

दुर्ल्लभं त्रिषु लोकेषु गयायां पिण्डपातनमिति

स्मृतिरत्नावलीवाक्याच्च।

तथान्येऽपि निषिद्धकाला गयायां प्रतिप्रसूताः। यथा

विवाहव्रतचूड़ासु वर्षमर्द्धं तदर्द्धकम्।

पिण्डदानं मृदा स्नानं न कुर्य्यात्तिलतर्पणमिति

कार्ष्णाजिनिवचनेन,

वृद्धिमात्रे तथान्यत्र पिण्डदाननिराक्रिया।
कृता गर्गादिभिर्मुख्यैर्मासमेकन्तु कर्म्मिणामिति

स्मृतिसंग्रहवाक्येन, च विवाहादेरूर्द्ध्वं वर्षादिकाल-
पर्य्यन्तं पिण्डदानस्य निषेधेऽपि

महालये गयाश्राद्धे मातापित्रोर्मृताहनि।
कृतोद्वाहोऽपि कुर्व्वीत पिण्डनिर्व्वपणं सुत इति,

पित्रोः क्षयाहे यज्ञे च पितृयज्ञे महालये।
गयायां पिण्डदानस्य न कदाचिन्निराक्रियेति च

त्रिस्थलीसेतुधृतस्मृति संग्रहवाक्यात् तत्प्रतिप्रसवः।
तथा तत्र तिलतर्पणनिषेधाभावोऽपि

उपरागे व्यतीपाते गयायामथ पर्व्वणि।
आदित्यादिनिषेधेऽपि कर्त्तव्यं तिलतर्पणमिति

स्मृतिदर्पणधृतसंग्रहवाक्यात्।

अथ गयाश्राद्धे निषिद्धकालः।

तीर्थश्राद्धं गयाश्राद्धं श्राद्धमन्यच्च पैतृकम्।
अब्दमध्ये न कुर्व्वीत महागुरुनिपातने।

इति गारुड़ात् प्रमीतमहागुरुकस्य वर्षमात्रं गया-
श्राद्धं निषिद्धम्। तत्रायं विशेषः वृद्ध्यादिनिमित्तक-
सपिण्डीकरणे तु कर्तुं शक्यत एव

अस्मिन्नेवं गयाश्राद्धं श्राद्धञ्चापरपक्षिकम्।
अब्दमध्ये न कुर्व्वीत सपिण्डीकरणं विना।

इति गारुड़वाक्यान्तरात्। अत्राप्यपरो विशेषः यदि पितृभक्तिमान् तदाब्दमध्येऽपि गयाश्राद्धं कर्तुं शक्नोति

अस्थिक्षेपं गयाश्राद्धं श्राद्धं चापरपक्षिकम्।

प्रथमाब्देऽपि कुर्वीत यदि स्याद्भक्तिमान् सुतः

इति त्रिस्थलीसेतुधृतवचनात्। अत्र भक्तिः प्रीतिरिति बहवः। अन्ये तु अब्दमध्ये प्रेतस्य देवतात्वयोग्यतासिद्धये देवतासंस्कारकमेकं पार्व्वणं कर्त्तव्यं तदेव भक्तिपदाभिधेयं तच्च कृत्वा गयाश्राद्धं कुर्य्यादित्याहुः। भक्त्या वर्षमध्ये गयाश्राद्धकरणे तु वृद्धाविव मासिकादीन्यपकृष्य कार्य्याणीति बोध्यम्।

अत्रेयं सम्प्रदायानुसारिणी व्यवस्था अकृतसपिण्डनस्य प्रथमाब्दे गयाश्राद्धं नैव कार्य्यं कृतसपिण्डनस्यापि सति सम्भवे प्रथमाब्दे नैव कार्य्यमित्येव मुख्यः पक्षः। प्रसङ्गतो गयाप्राप्तौ पुनरागमनाद्यसम्भावनायान्तु भक्त्या, मतान्तरोक्तं श्राद्धं कृत्वा वा प्रथमाब्देऽपि तत् कार्य्यं नितरत्वादिति।

महापातकिनामपि वर्षमात्रं गयाश्राद्धं न कार्य्यम्

क्रियते पतितानां च गते संवत्सरे क्वचित्।

देशधर्मप्रमाणत्वाद्गयाकूपे स्वबन्धुभिरिति

ब्राह्मात् कूपग्रहणं गयास्थतीर्थमात्रोपलक्षणम्। पतितानामिति यावद्धर्मरहितानामुपलक्षणार्थं ते च विस्तरभयान्नात्र लिखिताः। युक्तञ्चैतत् मिताक्षरायां

यावद्दुर्निमित्तमृतानां संवत्सरादूर्द्ध्वमेव नारायणबलि-
विधानपूर्व्वकं श्राद्धकरणस्योक्ततया गयाश्राद्धस्यापि तत्-
स्थानीयत्वेन तत् काले एव करणौचित्यात् ।

अतएव तद्धृतषट्त्रिंशन्मतीयवाक्यम्

गोब्राह्मणहतानाञ्च पतितानां तथैव च ।

ऊर्द्ध्वं संवत्सरात् कार्य्यं सर्व्वमेवौर्द्ध्वदेहिकमिति ।

अत्र सर्व्वमिति सर्व्वशब्दस्वरसात् नारायणबलेरिव
गयाश्राद्धादेरपि वर्षोत्तरमेव कर्त्तव्यता नार्व्वागिति प्रती-
यते । अतएव तद्वचनव्याख्यायां मिताक्षराकृता नारा-
यणबलिं कृत्वौर्द्ध्वदेहिकं कार्य्यमित्युक्तम् ।

एवञ्चात्मघातिनाम् "नास्ति किञ्चिद्गयां विने"त्युक्ति-
रपि वर्षोत्तरमेव तत्कर्त्तव्यतार्थैवेति बोध्यम् ।

अथ कर्त्तृविशेषे गयाश्राद्धविशेषः । तत्र

पितृणां दत्तमक्षयमिति,

पिण्डं दद्याच्च पित्रादेरिति,

च वायवीयात् पित्रादित्रयाणामुद्देश्यता ।

पितरो यत्र पूज्यन्ते तत्र मातामहादयः

इत्युक्तेः, गयामुपक्रम्य

मातामहानामप्येवं श्रुतिरेषा सनातनीति ।

पाद्मसृष्टिखण्डवचनाच्च, मातामहादीनामप्युद्देश्यते-
त्येवं षड्दैवतं पार्व्वणमिति गौड़ीयाः ।

अन्वष्टकायां वृद्धौ च गयायाञ्च क्षताहनि ।

अत्र मातुः पृथक्श्राद्धमन्यत्र पतिना सह

इति वायुग्निपुराणोक्तेः

नान्दीमुखेऽन्वष्टकायां गयायाञ्च मृताहनि।

पितामह्यादिभिः सार्द्धं मातुः श्राद्धं समाचरेत्

इति शातातपोक्तेश्च मात्रादीनामप्युद्देश्यता तेन नवदैवत्यम्। तत्राप्ययं विशेषः। नान्दीमुखे यजुर्वेदिनामेव नवदैवतपार्वणस्य विधानेन तस्याहचर्य्यात् तद्वेदिनामेव नवदैवत्यमिति।

पित्रादि नवदैवं वा तथा द्वादशदैवतम्।

वह्निपुराणीयात् मातामह्यादित्रिकसहितं नवदैवतमिति द्वादशदैवतं वा। तत्र वाशब्दश्रवसात् विकल्प एव गम्यते स च देशभेदादिना व्यवस्थितः। पितृव्यादीनान्तु एकोद्दिष्टमेव तदशक्तौ पिण्डदानमात्रं कार्य्यम्। तत्पत्नीनामपि पृथगेवैकोद्दिष्टादि कार्य्यम्

न योषिद्भ्यः पृथग्दद्यात्

इत्यादिना पृथग्दाननिषेधेऽपि

स्वगोत्रे परगोत्रे वा दम्पत्योः पिण्डपातनम्।

अपृथक् निष्फलं श्राद्धं पिण्डञ्चोदकतर्पणम्

इति वायवीये गयामुपक्रम्य सहदाननिषेधेन तत्प्रतिप्रसवात्

इतिश्रीतारानाथतर्कवाचस्पतिविरचितायां गयाश्राद्धपद्धतौ
प्रयोजनानुबन्धादिसमर्थनप्रकरणं सम्पूर्णम्।

अथ गयायात्राप्रयोगः। यात्रादिनात् प्राक् तृतीय दिने एकभक्तहविष्यभोजनब्रह्मचर्य्यादिनियमं विधाय तदुत्तरदिने कृतप्रातःस्नानादिनित्यक्रियः देशकालौ संकीर्त्त्य करिष्यमाणगयायात्राङ्गतयोपवासं करिष्ये इति संकल्प्योपोष्य च तत्परदिने स्नानादिनित्यकर्म्म कृत्वा पूजोपकरणं संपाद्यासने उपविश्याचम्य प्राणानायम्य देशकालौ संकीर्त्त्य करिष्यमाणगयायात्रा निर्व्विघ्नपरिसमाप्त्यर्थं गणेशसहितेष्टदेवताया यथाशक्ति पूजनमहं करिष्ये इति संकल्प्य यथाविभवं भक्त्या गणेशं स्वेष्टदेवताञ्च पूजयेत्। ततो दक्षिणामभिलष्य दत्त्वा घृतप्रधानं श्राद्धं कुर्य्यात्। तच्च पार्व्वणमाभ्युदयिकं वा कुलाचारानुसारेणानुष्ठेयम्। एतदपि गयायामिव षड्दैवतं नवदैवतं द्वादशदैवतं वेत्यत्रापि कुलाचार एव व्यवस्थापकः। तच्च शूद्रेण सर्व्वथैवामान्नेन वृद्धिवदेव कार्य्यं पक्वान्नपार्व्वणे तेषामनधिकारात्। द्विजैस्तु साग्निकैः पक्वान्नैर्न्निरग्निभिस्त्वामान्नैरेव दर्शवत् नान्दीमुखवद्वा कार्य्यम्। स्त्रीभिस्तु किञ्चिच्छ्राद्धं नैव कार्य्यमिति विशेषः।

अथ सर्व्वश्राद्धप्रकृतिपार्व्वणश्राद्धप्रयोगः। तत्र श्राद्धदिनात् पूर्व्वेद्युर्व्वर्ज्जितदन्तकाष्ठः श्राद्धभूमिं पाकसत्त्वे पाकभूमिं च विविक्तां कृत्वा गोमयेनोपलिप्य दृषदुपलोदूखलमुषलकण्डनशिलापेषणयन्त्रभोजनपात्रदर्व्वी प्रभृ

तीनि शुचीनि विधाय नूतनमृद्भाण्डानि ताम्रभाण्डानि वा पाकपात्राणि समाहृत्य श्राद्धादिषु उपयोक्ष्यमाणान-शेषान् पदार्थान् समाहृत्य कृतवस्त्रादिशौचः सर्व्वस्मिन् परिजने भुक्तवत्यसतुरपासादिव्रतान्तरे निरामिषमेक-वारं भुक्त्वा प्रथमरात्रे पात्रीयब्राह्मणान्निमन्त्रयेत्। तत् प्रकारस्त्वधुना पात्रीयब्राह्मणालाभेन तथाननुष्ठाना-न्नाभिधीयते कुशमयब्रह्मपक्षे तु तदभाव एव।

अथ परदिने वर्ज्जितदन्तधावनानुलेपनादिः कृत-शौचस्नाननित्यक्रियः गोमयोपलिप्ते सर्व्वत्र सङ्कीर्णतिले सन्निहित शुचिबन्धुज्ञाति सुहृत् सवर्णाहृतसलिलक्षालित-निखिलोपकरणे दूरोत्सारितबीभत्समत्सरिधूर्त्तशूद्रशूद्रा-पतिपतितपाषण्ड-षण्डकाण-कुष्ठिस्वर्णहृच्छ्वित्रिरजस्वला-स्वैरिणीसंकीर्णजातिकुजवामनहीनातिरिक्ताङ्गपशुविड्-वराहखरकरभकरटकुक्कुटश्वनकुलविड़ालनीलकषायवा-ससि महानसे नानाविधानि शालितण्डुलादीनि हवि-ष्यान्नानि सचेलं स्नातः सपत्नीको यजमानः स्वयं वा पक्तुमारभेत। अत्र बीभत्सादयो न केवलं पाकस्थानाद-पसारणीयाः। किन्तु श्राद्धदेशादप्यपसारणीयाः। प्रमादादपि तैरालोकितानि पक्वादीनि श्राद्धानर्हत्वेन त्याज्यानि। पाकान्तरासम्भवे तु गौरसर्षपकृष्णतिलैरव-कीर्य प्रशस्तमृत्तिकाभस्महिरण्यदर्भसंसृष्टैर्ज्जलैः शुद्ध-वत्यादिभिर्मन्त्रैश्च प्रोक्षणं विदध्यात्। शुद्धवत्यादयस्तु

शुद्धवत्योऽथ कुष्माण्ड्यः पावमान्यस्तरत्समाः (१)।
एताभिः प्रोक्षणं कुर्यात् सूर्य्यादीनाञ्च दर्शयेत्" इति
श्राद्धकल्पोक्ता बोध्याः। एतासामन्यतमया प्रोक्षणं
कार्य्यमित्याचारः। गौड़ानान्तु स्वच्छजलप्रोक्षणमात्राचारः।

अथ वर्ज्ज्यानि।

अतिशुक्तोग्रलवणं विरसं चाप्यसंस्कृतम्।
राजसं तामसं चैव विशुष्कं परिलङ्घितम्।
आसनारूढमन्नाद्यं पादोपहतमेव च।
अमेध्यादागतैः स्पृष्टं प्रत्यक्षलवणीकृतम्।
द्विःस्विन्नं परिदग्धञ्च तथैवाग्रावलेहितम्।
शर्कराजतुपाषाणभस्मकेशाद्युपद्रुतम्।
वाग्भावकर्म्मदुष्टञ्च दुष्टैरुपहृतं तथा।
वाससा चावधूतञ्च यद् घृतादि नखच्युतम्।
एकेन पाणिना दत्तं पाणिना परिवेषितम्।
यद्यप्युद्धृतमेतानि वर्ज्ज्यानि श्राद्धकर्म्मणि।
सक्तुपानपयोऽपूपदधितक्रघृतादृते।
विना च स्नेहपक्वेन क्रोलमन्नं विवर्ज्जयेत्।
फलेक्षुवटकापूपधानाकृशरपायसम्।

---

(१) शुद्धवत्यः एतो न्विन्द्रमित्यादिमन्त्रत्रयम्। (ऋ० ८ म० ८४ सू०) कुष्माण्ड्यः यद्देवा इत्यादयः अग्रे वक्ष्यन्ते। पावमान्यः स्वादिष्ठयेत्यादिर्हिन्वन्तीत्यन्ताषट्षष्टिसूक्तात्मिकाः। तन्मध्ये अष्टपञ्चाशसूक्तम् तरत्समित्यादि चतुष्टयम्। ऋ० ९ म० ५८ सू० १,२,३, ४ म०।

स्ने इपक्कानि सक्तूंश्च मुक्का पर्युषितं त्यजेदिति। श्राद्धकल्पोक्तानि बोध्यानि। (अतिभुक्तम्) चिरावस्था-नाज्जातरसगन्धान्तरम्। कट्वम्ललवणात्युष्णतीक्ष्णरु-क्षविदाह्यन्नम् (राजसम्) उच्छिष्टाशुचिपूतिविरसमन्नम् (तामसम्)। उपरिगत्या लङ्घितम् (परिलङ्घितम्)। पाकोत्तरं दत्तलवणम् (प्रत्यक्षलवणम्)। द्विःपक्कमन्नम् (द्विःस्विन्नम्)। यज्जातीयमन्नं व्यञ्जनं वा यत्प्रकारेण पाच्यं तावतः पाकस्य द्विरावृत्तौ द्विःस्विन्नं तेन प्रकारा-न्तरेण जलघृतादिभ्यां द्विधा पक्कं शाकादि न द्विःस्विन्नम्। (पाणिना) दर्व्यादिशून्येन पाणिना।

अथ षष्ठमुहूर्त्तकृत्यम्। नद्यादौ नित्यस्नानादिकं विधाय श्राद्धार्थं स्वयमुदकमाहृत्य शुचिशुक्लवासाः सन्नि-हितबद्धब्राह्मणच्छागे प्रदीपितदीपे शुचौ विविक्ते गोमयो-पलिप्ते श्राद्धदेशे उत्तरतः समूलान् सकृदुपमूलच्छिन्नान् दर्भान् यवकृष्णतिलाक्षतमधुगन्धपुष्पधूपाच्छादनानि खड्ग-शृङ्गाद्यर्घपात्राणि जलपात्रं च कृष्णाजिनोपरि संस्थाप्य नेपालकम्बलादीन्यासनानि छत्रोपानत्कमण्डलुभोजन-पात्राणि क्षौमं सूत्रं चेति सम्भारानानीय तदुत्तरतः पक्क-द्रव्याणि स्थापयेत्।

अथापराह्ने कुतपादौ वा कर्त्ता श्राद्धदेशात् पश्चिमतो गोमयगोमूत्राभ्यां द्विहस्तमात्रदीर्घविस्तारमुदक्प्लवमेकं चतुरस्रं मण्डलं विधाय ततो दक्षिणतो दक्षिणप्लवं चतु-

हस्तदीर्घविस्तारमपरं चतुरस्रं कुर्य्यात्। अथ यज्ञोपवीती उत्तरमण्डले सयवकुसुमौ प्रागग्रौ द्वौ द्वौ कुशौ विन्यस्य मण्डलमभ्यर्च्य तत्र ब्राह्मणपीठौ विन्यसेत्। अथैतयोः पीठयोः प्राङ्मुखौ वैश्वदैविकार्थौ द्वौ द्विजौ कुशमयौ द्विजौ वा प्रदक्षिणं समुपवेश्य "पुरूरवार्द्रवःसंज्ञका विश्वे देवा इदं वः पाद्य"मित्युक्त्वा पादयोः सकुशकुसुमयवं जलमञ्जलिना पादप्रक्षालनार्थं दद्यात्। गौड़ास्तु पुरूरवोमाद्रवसौ इत्येवं पठन्ति।

ततो वास्तुपुरुषविष्णुगङ्गापूजनं विधाय परक्षेत्रे तन्मूल्यं दद्यात् तद्भूस्वामिपितॄन् वाभ्यर्च्चयेत्। तीर्थादौ तु न कोऽपि भूस्वामीति न तत् कुर्य्यादिति विशेषः।

ततः सहस्रशीर्षेत्यस्य नारायणपुरुष ऋषिरनुष्टुप् छन्दो नारायणो देवता देवब्राह्मणपूजने विनियोग इति स्मृत्वा।

ओं सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् (१)।

---

(१) सहस्रशीर्षा बहुमस्तकः अव्यक्तादिभिन्नश्चेतनः सर्व्वप्राणिसमष्टिरूपः सर्व्वप्राणिनां यानि शिरांसि तान्येव तस्यापि, तस्य सर्व्वदेहान्तःपातित्वात्। सहस्राक्षः बहुनेत्रः सहस्रपात् बहुचरणः अक्षिपादशब्दस्य सर्व्वज्ञानकर्म्मेन्द्रियोपलक्षकः। स पुरुषो भूमिं ब्रह्माण्डं सर्व्वतः ऊर्द्ध्वमधस्तिर्य्यक् च स्पृत्वा व्याप्य दशाङ्गुलं नाभेरिति शेषः अत्यतिष्ठत् अतिक्रम्य हृदि स्थितः। सामवेदे ऋग्वेदे च सर्व्वतः स्पृत्वेत्यत्र विश्वतो वृत्वेति पाठः। तैत्तिरीयादिभिस्तथैव पाठ्यम्।

स भूमिं सर्व्वतः स्पृत्वाऽत्यतिष्ठद्दशाङ्गुलमिति (य०३१अ०१म०) मन्त्रेण दैवविप्रौ क्रमेण दक्षिणे, वामे, च पादे तथैव जानुनोः पार्श्वयोः, अंसयोः, शिरसि च यवपुष्पैरभ्यर्च्य ओं पुरूरवार्द्रवःसंज्ञका विश्वे देवा एष वोऽर्घ इति निवेद्य संभृतयवकुशकुसुमगन्धोदकेन पात्रेण विप्रयोः पादेष्वर्घं दद्यात्। सामगस्तु इदमर्घ्यमिति वदेत्। पुरूरवार्द्रवःसंज्ञाधिष्ठानभूता देवता यद्यप्येकैव तथाप्याचारात् बहुवचनं प्रयोज्यं पूज्यत्वात्। एवं पित्रादिष्वप्येकस्मिन्नर्थे क्वचिद्बहुवचनं क्वचिदेकवचनं वाचारात्प्रयोज्यमिति बोध्यम्।

ततो दक्षिणमण्डले प्रादक्षिण्येन उदङ्मुखान् पित्रादि विप्रानुपवेश्य अमुकगोत्र! वसुरूप! पितरमुकदेवशर्म्मन्! एतत्ते पाद्यमित्युक्ता तिलकुशकुसुमसहितं जलं पादप्रक्षालनार्थमञ्जलिना पितृद्विजपादयोर्दत्त्वा पादं प्रक्षालयेत्। प्रतीच्यास्तु पितरित्यत्र सपत्नीकास्त्वित-रित्यादि प्रयुञ्जते। एवं सर्व्वत्र। ततः पितामहं रुद्ररूपं प्रपितामहमादित्यरूपं मातामहादीन् वसुरुद्रादित्यरूपान् प्रकीर्त्तयन् पूर्व्ववत् प्रयोगमुच्चार्य्य शेषद्विजानामपि पाद्यप्रदानपूर्व्वकं पादप्रक्षालनं कुर्य्यात्। पितृभ्य इत्यस्य प्रजापत्यग्निसरस्वत्यृषयः पितरो देवताः पितृद्विजपूजने विनियोगः।

ओं पितृभ्यः स्वधायिभ्यः स्वधा नमः।

पितामहेभ्यः स्वधायिभ्यः स्वधा नमः।

प्रपितामहेभ्यः स्वधायिभ्यः स्वधा नमः।

अक्षन् पितरः अमीमदन्त पितरः। अतीतृपन्त पितरः। पितरः शुन्धन्ताम् ( य०१९अ०३६म० ) इति मन्त्रेण(१)। शिरसि क्रमेण दक्षिणवामयोरंसयोस्तथैव पाण्योः जानुनोः पादयोश्च तिलकुसुमैः पितृद्विजानभ्यर्च्चयेत्।

नमो व इत्यस्य प्रजापतिर्ऋषिः ऋतुरूपाः पितरो देवता मातामहद्विजोपस्थाने विनियोगः।

ओं नमो वः पितरो रसाय (२)।

नमो वः पितरः शोषाय।

नमो वः पितरो जीवाय।

नमो वः पितरः स्वधायै।

---

(१) स्वधामन्नं प्रति यन्तीति तेभ्यः स्वधायिभ्यः पितृभ्यः स्वधा अन्नमस्त्विति शेषः तेभ्यो नमोऽस्तु। एवं पितामहेभ्यः प्रपितामहेभ्य इत्यनयोरप्यर्थः। पितरः अक्षन् भक्षितवन्तः घसेर्लुङि रूपम्। पितरः अमीमदन्त मद तृप्तौ मादयन्ति स्म। पितरः अतीतृपन्त अस्मत्पिताः अस्मान् तर्पयन्ति स्म। हे पितरः! शुद्धन्तां पवित्रीकुरुत।

(२) हे पितरः! वो युष्माकं रसाय रसभूताय वसन्ताय नमः मध्वादिरसहेतुत्वाद्वसन्तस्य रसता। एवमग्रेतना मन्त्रा व्याख्येयाः।

शुष्यन्त्योषधयो यत्रेति शोषो ग्रीष्मस्तस्मै।

जीवाय जीवनाय जीवनहेतवे जलरूपाय वर्षर्त्तवे। शरदि प्रायशोऽन्नानि भवन्तीति पितृदेयान्नहेतुत्वात् शरदः स्वधारूपता तस्मै स्वधायै।

नमो वः पितरो घोराय।

नमो वः पितरो मन्यवे।

नमो वः पितरः पितरोनमो वः। ( य०२अ०३२म० )

इति मन्त्रेण मातामहद्विजान् तथैवाभ्यर्च्य पाद्यवत् प्रयोग मुक्ता सम्भृतकुशयुक्तेन पात्रेणार्घं दद्यात्। तत उपवीती निक्षिप्तयवदर्भयोरासनयोरुपरि प्राङ्मुखौ उत्तरदिक्संस्थौ दैवद्विजावुपवेश्य प्राचीनावीती निक्षिप्ततिलकुशेष्वासनेषु प्रतीच्यादिक्रमेण प्राक्संस्थान् पितृमातामहादिद्विजान् उपवेश्य च ब्राह्मणसंख्यया च दीपान् स्थापयेत्। अथ कृताञ्जलिर्दक्षिणामुखः सव्यं जानु भूमौ पातयित्वा पुरःस्थितं गदाधरं ध्यायन् गङ्गागदाधरौ नमस्कुर्य्यात्।

शङ्खचक्रधरं विष्णुं द्विभुजं पीतवाससम्।

प्रारम्भे कर्म्मणां विप्र! पुण्डरीकं स्मरेद्धरिम्

इत्युक्तेः

यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु।

न्यूनं संपूर्णतां याति सद्यो वन्दे तमच्युतम्

इत्यनेन विष्णुं स्मृत्वा प्राणानायम्य पितॄन् नमस्कुर्य्यात् यथा

---

शीताधिकतया दुःखदत्वात् घोराय हेमन्ताय। ओषधेर्दाहकत्वे न मन्यवे क्रोधरूपाय शिशिराय। हे पितरः! एवंभूतऋतुरूपेभ्यो वो नमोऽस्तु द्विरुक्तिरादरातिशयार्था।

ओं देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च।

नमः स्वधायै स्वाहायै नित्यमेव भवन्त्विति।

इति त्रिधा जपेत्। प्रतीच्यास्तु।

नमः स्वाहायै स्वधायै नित्यमेव नमः स्वधेति।

पठन्ति। एतच्च श्राद्धानुष्ठानान्तरं गायत्रीजपादनन्तरञ्च जप्यमिति रघुनन्दनादयः।

ततः संकल्पं कुर्य्यात्। तत्र मासपक्षतिथ्यादिनिमित्तानामेवोल्लेख इति गौड़ाः। हेमाद्रौ तु सर्व्वकालवत् सर्व्वदेशोल्लेख उक्तः। तदनुसारेणोल्लेखवाक्यमभिधीयते। ओं तत्सदद्य पृथ्व्यां जम्बुद्वीपे भारतवर्षे प्रजापतिक्षेत्रेऽमुकप्रदेशे इत्यादिनार्य्यावर्त्तादिदेशनामानुकीर्त्त्य अद्य श्रीब्रह्मणो द्वितीयपरार्द्धे श्वेतवराहकल्पे वैवस्वतमन्वन्तरेऽष्टाविंशतिमे युगे कलावाद्यपादे इत्युक्त्वा संवत्सरायनर्त्तुमासपक्षतिथिनक्षत्रयोगकरणकुतपादिकालनामानि सप्तम्यन्तान्यनुकीर्त्त्य पित्रादितृप्तिकामः अमुकगोत्रामुकदेवशर्म्मणाम् वसुरुद्रादित्यरूपाणां पित्रादीनां तथाविधानां मातामहादीनाञ्च सदैवं पार्व्वणश्राद्धमहं करिष्ये इति।

प्रकृते च गयायात्राङ्गभूतमिति श्राद्धं विशेषणीयम्। ततः कर्म्मकारयितृद्विजेन "ओं कुरुष्व" इति प्रतिवदेदेवं सर्व्वत्र। ततो गायत्रीमार्षादिस्मरणपूर्व्वकं जपेत्। देवताभ्य इत्यप्यत्रैव जपेदित्यन्ये।

ओं निहन्मि सर्व्वं (१) यदमेध्यमत्र
निहन्मि सर्व्वानपि दानवासुरान्।
रक्षांसि यक्षाश्च पिशाचसंघा
हता मया यातुधानाश्च सर्व्वे॥

इति मन्त्रेण विघ्नान्निहत्य वामकटिलग्नवस्त्रं वह्निभागे निवेश्य तिलकुशान्वितानां परिधानवस्त्रदशानां गोपनं कुर्य्यात्

ओं तिला रक्षन्त्वसुराद् दर्भा रक्षन्तु राक्षसात्।
वह्निर्वै श्रोत्रियं रक्षेदतिथिः सर्व्वरक्षकः।
इति मन्त्रेण तिलकुशान् द्वारदेशे क्षिप्त्वा
ओं अग्निष्वात्ताः पितृगणाः प्राचीं रक्षन्तु मे दिशम्

इति मन्त्रेण प्राच्याम्

ओं तथा वर्हिषदः पान्तु याम्यां ये पितरः स्थिताः।
इति मन्त्रेण याम्याम्
ओं प्रतीचीमाज्यपास्तद्वत्
इत्यनेन प्रतीच्याम्
ओं उदीचीमपि सोमपाः
इत्यनेनोदीच्याम्
ओं अधोर्द्ध्वमपि कोणेषु हविष्मन्तश्च सर्व्वत इति।
रक्षोभूतपिशाचेभ्य तथैवासुरपोषकः।
सर्व्वतश्चाधिपस्तेषां यमो रक्षां करोतु मे।

(१) यदमेध्यवद्भवेद्धताश्च सर्वे सुरदानवा मया इति गौड़ाः पठन्ति।

वायुभूतपितॄणां च तृप्तिर्भवतु शाश्वती।

इत्यनेन अधस्तादूर्द्ध्वं कोणेषु च सर्व्वत्र तिलान् विकिरेत्। ततः पात्रस्थं जलं दर्भैरालोड्य

यद्देवा इत्यादितिसृणां प्रजापतिर्ऋषिरनुष्टुप् छन्दः क्रमेण अग्निवायुसूर्य्या देवताः श्राद्धद्रव्यशोधने विनियोगः

ओं यद्देवा देवहेडनं देवासश्चकृमा वयम्।
अग्निर्म्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः ॥ १ ॥
यदि दिवा यदि नक्तमेनांसि चकृमा वयम्।
वायुर्मा तस्मादेनसो विश्वान् मुञ्चत्वंहसः ॥ २ ॥
यदि जाग्रत् यदि स्वप्न एनांसि चकृमा वयम्।
सूर्य्यो मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः ॥ ३ ॥ (१)

(य० २० अ० १४, १५, १६म०) इति मन्त्रैरभिमन्त्र्य दुष्टदृष्टिनिपातदूषितं पाकादिपूतं भवत्वित्युक्त्वा तेन श्राद्धद्रव्यं प्रोक्षेत्। गौड़ास्तु मज्जलादिभिः प्रोक्षणमेव कुर्व्वन्ति। शुद्धवत्यादिभिः प्रोक्षणं पूर्व्वं सूचितम-

---

(१) दीव्यन्तीति देवा दीप्यमाना हे देवासः! देवा वयं यद्देवहेडनं देवानामपराधं चकृमा कृतवन्तः छान्दसो दीर्घः। अग्निस्तस्मादेनसः पापात् विश्वात् विश्वस्मात् सर्व्वस्मात् अंहसो विघ्नाच्च मा मां मुञ्चतु पृथक् करोतु। स्मादभाव आर्षः ॥ १ ॥ यदि चेत् दिवा अहनि यदि नक्तं रात्रौ वयमेनांसि पापानि चकृमा कृतवन्तः। वायुस्तस्मादित्यादि प्राग्वत्। (२) यदि जाग्रत् जाग्रति सप्तम्या लुक् यदि स्वप्ने स्वप्नावस्थायामेनांसि वयं चकृमा सूर्य्यस्तस्मादित्यादि प्राग्वत्। (३) इति कुष्माण्डीसंज्ञा ऋचः

त्रैव काले कार्य्यम्। यज्ञोपवीती पातितदक्षिणजानुः पवित्रपाणिर्व्वामहस्तविधृतबह्कुश उदङ्मुखः समासीनो दैविकं, पैतृकं तु दक्षिणामुखः पातितवामजानुः प्राचीनावीती सर्व्वं कुर्य्यात्।

ततः ओं पुरूरवार्द्रवःसंज्ञकानां विश्वेषां देवानामिदमासनमस्त्विति जलयवसहितौ द्वौ कुशौ प्रथमवैश्वदैविकद्विजदक्षिणभागे विन्यसेत्। ओं स्वासनमस्त्विति प्रतिब्रूयात् एवमितरत्रापि। ततो दक्षप्रजापतेर्दुहितरि विश्वाभिधायां, धर्म्माद्विश्वे देवाः समुत्पन्ना इति वैश्वदैविकीमुत्पत्तिमनुस्मरन् गृहीतयवकुशेन दक्षिणपाणिना कुशद्विजं स्पृष्ट्वा ओं पुरूरवार्द्रवःसंज्ञकान् विश्वान् देवानावाहयिष्ये इति वैश्वदैविकद्विजौ पृच्छेत् ताभ्याञ्चावाहयेत्यनुज्ञातः। विश्वे देवास इत्यस्य मधुच्छन्दा ऋषिर्गायत्री छन्दो विश्वे देवा देवता विश्वदेवावाहने विनियोग इति स्मृत्वा

ओं विश्वे देवास आगत शृणुता म इमं हवम्।

एदं बर्हिर्निषीदत (१) (य० ७ अ० ३४म०) इति जपित्वा द्विजाग्रे यवानुत्सृज्य कृताञ्जलिः प्रार्थयेत यथा।

---

(१) हे विश्वे देवासः! देवा यूयमागत अस्मद्यज्ञं प्रति आगच्छत आगत्य च मे ममेमं हवमाह्वानं शृणुता शृणुत श्रुत्वा च इदं मदीयं बर्हिः कुशमा निषीदत। व्यवहितेनाङा निषीदतेत्यस्यान्वयः। रूपसिद्धिश्छान्दसी। आ इदमिति च्छेदः।

विश्वे देवा इत्यस्य सुहोत्र ऋषिस्त्रिष्टुप् छन्दो विश्वे देवा देवता विश्वदेवप्रार्थने विनियोग इति स्मृत्वा

ओं विश्वे देवाः शृणुतेमं हवं मे
ये अन्तरिक्षे य उप द्यवि ष्ठ।
ये अग्निजिह्वा य उत यजत्रा
आसद्यास्मिन् बर्हिषि मादयध्वम् (१)
( य० ३३ अ० ५३ म० ) इति
ओं आगच्छन्तु महाभागा विश्वे देवा वरप्रदाः (२)
ये यत्र विहिताः श्राद्धे सावधाना भवन्तु ते

इति च पठेत्। द्विजानेकत्वेऽपि न प्रतिद्विजमावाहनावृत्तिरेकावाहनेनैव सर्वसान्निध्यसम्भवात्।

ततः साग्रं प्रादेशमात्रं कुशपत्रद्वयं गृहीत्वा पवित्रे इत्यस्य प्रजापतिर्ऋषिः पवित्रे देवते तच्छेदने विनियोग इति स्मृत्वा

ओं पवित्रे स्थो वैष्णव्यौ (३) ( य० अ० ११ म० )
इत्यनेन पवित्रं छित्त्वा

---

(१) हे विश्वे देवा! ये यूयमन्तरिक्षे ष्ठ स्थ भवथ ये च उप समीपे पृथिव्यां द्यवि स्वर्गे च ये, ये चाग्निजिह्वा वह्निमुखा उत वा अपि च यजत्रा यजमानत्रातारस्ते यूयमिमं मे मत्कृतं हवमाह्वानं शृणुत श्रुत्वा चास्मिन् बर्हिषि कुशे आसद्योपविश्य मादयध्वं तृप्यत। रूपसिद्धिश्छान्दसी।

(२) वरप्रदा इत्यत्र महाबला इति ब्राह्मणसर्वस्वादौ पाठः।

(३) हे पवित्रे युवां वैष्णव्यौ विष्णुदेवताके स्थो भवथः।

विष्णोरित्यस्यार्षादिकमनुपदवत् स्मृत्वा पवित्रीकरणे विनियोगः ।

ओं विष्णोर्मनसा पूते स्थः (१) ।

इत्यनेन पवित्रे पवित्रे कृत्वा प्रागग्रासादितदर्भोपरि दक्षिणोदक्संस्थयोः सौवर्णादिपात्रयोर्मध्ये प्रागग्रे द्वे कुशपवित्रे निधाय

शन्नो देवीरित्यस्य दध्यङ्ङाथर्व्वण ऋषिर्गायत्री छन्दः आपो देवता अर्घपात्रे जलदाने विनियोगः इति स्मृत्वा

ओं शन्नो देवीरभीष्टय आपो भवन्तु पीतये ।

शंयोरभिस्रवन्तु नः (२) (य० ३६ अ० १२ म०)

इत्यनेन देवतीर्थेन जलमर्घपात्रे दत्त्वा यवोऽसीत्यस्य प्रजापतिर्ऋषिः यवो देवताऽर्घपात्रे यवदाने विनियोगः इति स्मृत्वा

ओं यवोऽसि यवयास्मद्द्वेषो यवयारातीः ( ३ ) इति

---

( १ ) हे पवित्रे विष्णोर्मनसा चन्द्रेण पूते पवित्रे स्थो भवथः । चन्द्रमा मनसो जात इति श्रुत्या विष्णुमनोजातत्वेन विष्णोर्मनोरूपता तस्य च सर्वौषधिषु रसादिदानाय सञ्चारात् पवित्रीकारकता ।

(२) देवीः देव्यो दीप्यमाना आपो नोऽस्माकमभीष्टये अभिषेकायाभीष्टाय वा पीतये पानाय च शं सुखरूपा भवन्तु शंयोः कल्याणयोगादभिस्रवन्तु गच्छन्तु सामवेदे तु आपो भवन्त्वित्यत्र शन्नो भवन्त्विति पाठस्तद्वेदिभिस्तथैव पाठ्यम् ।

(३) त्वं यवोऽसि स्वयमेव पृथक्करः । तस्मादस्मद्द्वेषः अस्माकं कृत्रिमशत्रून् अरातीः सहजशत्रूंश्च यवय पृथक् असंहतान् कुरु ।

पठेत् । सामगैस्तु द्विवे त्वित्याद्यधिकोऽग्रे वक्ष्यमाणः मन्त्रः पाठ्यः ।

यवोऽसि धान्यराजोऽसि वारुणो मधुसंयुतः ।
निर्णोदः सर्व्वपापानां पवित्र ऋषिभिः स्मृत इति

पुराणमन्त्रेण यवान् तूष्णीं गन्धपुष्पदूर्व्वाक्षता-दिकं च दत्त्वा कुशान्तरेणाच्छाद्य दैवार्घपात्रयोरच्छिद्र-ताम्स्वित्युक्ते अच्छिद्रे स्तामिति विप्राभ्यां प्रत्युक्ते तयोः पुरस्तादर्घपात्रं स्थापयेत् । तत उद्धाव्य विप्रहस्तयोः पवित्रे जलं पुष्पं पुष्पान्तरञ्च दत्त्वा विप्रपाणौ जल-मासिच्य सहस्रशीर्षेत्यादिना (२७१०) पूर्व्ववत् पादादि-शिरोऽन्तं पुष्पयवैर्द्विजौ पृथगभ्यर्च्य हस्तद्वयेनार्घपात्र-मुद्धृत्य या दिव्या इत्यस्य प्रजापतिरृषिस्त्रिष्टुप् छन्द आपो देवता अर्घपात्रस्थजलदाने विनियोग इति स्मृत्वा

ओं या दिव्या आपः पयसा संबभूवु
र्या अन्तरिक्ष उत पार्थिवीर्याः ।
हिरण्यवर्णा यज्ञियास्ता न आपः
शिवाः शं स्योना सुहवा भवन्तु (१) इत्युच्चार्य

---

(१) या आपो जलानि पयसा क्षीरेण संबभूवुः सङ्गता माधुर्य्य-शीतलत्वादिनैकीभूता इत्यर्थः । याश्च दिव्या दिवि स्वर्गे भवाः उत अपि अन्तरिक्षे आकाशे भवाः उत याः पार्थिवीः पार्थिव्यः पृथिव्यां भवाः हिरण्यवर्णाः रजतवर्णाः शुक्ला इत्यर्थः । यज्ञिया यज्ञार्हास्ता आपो नोऽस्माकं शिवाः सुखरूपा शं कल्याणरूपाः स्योनाः सुखदाः सुहवाः सुष्ठु ब्राह्मणहस्ते हुता भवन्तु । रूपसिद्धिश्छान्दसी ।

विष्णोरित्यस्यार्षादिकमनुपदवत् स्मृत्वा पवित्रीकरणे विनियोगः।

ओं विष्णोर्मनसा पूते स्थः (१)।

इत्यनेन पवित्रे पवित्रे कृत्वा प्रागग्रासादितदर्भोपरि दक्षिणाद्युदक्संस्थयोः सौवर्णादिपात्रयोर्मध्ये प्रागग्रे द्वे कुशपवित्रे निधाय

शन्नो देवीरित्यस्य दध्यङ्ङाथर्वण ऋषिर्गायत्री छन्दः आपो देवता अर्घपात्रे जलदाने विनियोगः इति स्मृत्वा

ओं शन्नो देवीरभीष्टय आपो भवन्तु पीतये।

शंयोरभिस्रवन्तु नः (२) (य० ३६ अ० १२ म०)

इत्यनेन देवतीर्थेन जलमर्घपात्रे दत्त्वा यवोऽसीत्यस्य प्रजापतिर्ऋषिः यवो देवताऽर्घपात्रे यवदाने विनियोगः इति स्मृत्वा

ओं यवोऽसि यवयास्मद्द्वेषो यवयारातीः (३) इति

---

(१) हे पवित्रे विष्णोर्मनसा चन्द्रेण पूते पवित्रे स्थो भवथः। चन्द्रमा मनसो जात इति स्मृत्या विष्णुमनोजातत्वेन विष्णोर्मनोरूपता तस्य च सर्वौषधिषु रसादिदानाय सञ्चारात् पवित्रीकारकता।

(२) देवीः देव्यो दीप्यमाना आपो नोऽस्माकमभीष्टजे अभिषेकायाभीष्टाय वा पीतये पानाय च शं सुखरूपा भवन्तु शंयोः कल्याणयोगादभिस्रवन्तु गच्छन्तु सामवेदे तु आपो भवन्त्वित्यत्र शन्नो भवन्त्विति पाठस्तद्वेदिभिस्तथैव पाठ्यम्।

(३) त्वं यवोऽसि स्वयमेव पृथक्करः। तस्मादस्मद्द्वेषः अस्माकं शत्रूनस्मत्तून् अरातीः सहजशत्रूंश्च यवय पृथक् असंहतान् कुरु।

पठेत्। सामगैस्तु दिवे त्वेत्याद्यधिकोऽग्रे वक्ष्यमाणः मन्त्रः पाठ्यः।

यवोऽसि धान्यराजोऽसि वारुणो मधुसंयुतः।
निर्णोदः सर्वपापानां पवित्र ऋषिभिः स्मृत इति

पुराणमन्त्रेण यवान् तूष्णीं गन्धपुष्पदूर्वाक्षतादिकं च दत्त्वा कुशान्तरेणाच्छाद्य दैवार्घपात्रयोरच्छिद्रतास्त्वित्युक्ते अच्छिद्रे स्तामिति विप्राभ्यां प्रत्युक्ते तयोः पुरस्तादर्घपात्रं स्थापयेत्। तत उद्घाट्य विप्रहस्तयोः पवित्रे जलं पुष्पं पुष्पान्तरञ्च दत्त्वा विप्रपाणौ जलमासिच्य सहस्रशीर्षेत्यादिना (२७४०) पूर्ववत् पादादिशिरोऽन्तं पुष्पयवैर्द्विजौ पृथगभ्यर्च्य हस्तद्वयेनार्घपात्रमुद्धृत्य या दिव्या इत्यस्य प्रजापतिरृषिस्त्रिष्टुप् छन्द आपो देवता अर्घपात्रस्थजलदाने विनियोग इति स्मृत्वा

ओं या दिव्या आपः पयसा संबभूवु
र्या अन्तरिक्ष उत पार्थिवीर्याः।
हिरण्यवर्णा यज्ञियास्ता न आपः
शिवाः शं स्योना सुहवा भवन्तु (१) इत्युच्चार्य

(१) या आपो जलानि पयसा क्षीरेण संबभूवुः सङ्गता माधुर्य्यशीतलत्वादिनैकीभूता इत्यर्थः। याश्च दिव्या दिवि स्वर्गे भवाः उत अपि अन्तरिक्षे आकाशे भवाः उत याः पार्थिवीः पार्थिव्यः पृथिव्यां भवाः हिरण्यवर्णाः रजतवर्णाः शुक्ला इत्यर्थः। यज्ञिया यज्ञार्हास्ता आपो नोऽस्माकं शिवाः सुखरूपा शं कल्याणरूपाः स्योनाः सुखदाः सुहवाः सुष्ठु ब्राह्मणहस्ते हुता भवन्तु। रूपसिद्धिश्छान्दसी।

ओँ पुरूरवार्द्रवःसञ्ज्ञका ! विश्वे देवा ! एष वोऽर्घ इति निवेद्य विप्रहस्ते पवित्रोपरि पात्रस्थं कृत्स्नं जलं दद्यात्। एवमन्यस्यापि।

ततो द्विजयोर्हस्ते जलमासिच्य ओँ पुरूरवार्द्रवः-संज्ञकेभ्यो विश्वेभ्यो देवेभ्य एतानि वो गन्धपुष्पधूपदीपा-च्छादनविभूषणच्छत्रोपानत्पादुकाकमण्डलुप्रभृतीनि नम इत्यनेन निवेद्य प्रतिद्रव्यं दद्यात्। अभावे गन्धादिपञ्चक-मात्रं दद्यात्। सर्व्वत्र सुगन्धोऽस्त्विति सुपुष्पमस्त्वित्यादि-क्रमेण द्विजप्रतिवचनम्।

एवं देवविप्रद्वयार्च्चनं विधाय कृताञ्जलिः भवत्प्रसा-दाद्वैश्वदेवार्च्चनविधिः सम्पूर्णोऽस्तु इति प्रार्थयेत। अस्तु सम्पूर्ण इति प्रतिवचने सङ्कल्पसिद्धिरस्त्विति भवन्तोऽधि-ब्रुवन्त्विति प्रार्थयेत। अस्तु सङ्कल्पसिद्धिरिति प्रतिवचने नमस्कृत्य यस्य स्मृतेरित्यादि (२०पृ०) प्रागुक्तं पठेत् इति दैविकासनदानादिकर्म्मकाण्डम्।

अथ पितृपक्षासनदानादि। अमुकगोत्र ! वसुरूप ! पितरमुकदेवशर्म्मन् ! एतत्ते दर्भासनं स्वधा इति निवे-दयेत्। छन्दोगैस्तु

ओँ ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधेत्यधि-कम् प्रयोज्यमेवं सर्व्वत्रार्घ्यादिदानवाक्यान्ते योजनीयम्।

---

ये जनाः अत्र श्राद्धकर्म्मणि समनुगता इति शेषः एवं यान् अनु-वर्त्तमानोऽसि त्वं तस्मै तेभ्यः ते तुभ्यञ्च स्वधा तदुद्देशे त्वदुद्देशे च त्यागः।

ततो द्विजकरे जलं दत्त्वा मध्यभागे द्विगुणीकृतान् त्रीन् सतिलान् दर्भान् द्विजासनवामभागे दद्यात्। द्विजस्तु स्वासनमस्त्विति प्रतिवदेत्। एवं पितामहं रुद्ररूपं प्रतितामहमादित्यरूपं मातामहादीन् वसुरुद्रादित्यरूपांश्च नामगोत्रोल्लेखपूर्व्वकमनुकीर्त्त्य तदीयद्विजानां करेषु जलं दत्त्वासनं प्राग्वत् दद्यात्। गौड़ास्तु पित्रादीनाम् आसनगन्धाद्यन्नदानान्येकवाक्यप्रयोगेणाचरन्ति।

ततः गृहीततिलकुशेन हस्तेन पितृद्विजं स्पृष्ट्वा ओं वसुरुद्रादित्यरूपान् पितॄनावाहयिष्ये इति प्रश्ने तेनावाहयेति प्रत्युक्ते क्रमेण पित्राद्यधिष्ठानभूतेषु द्विजेषु पित्रादीन् वस्वादिरूपेण ध्यायन् उशन्त इत्यस्य शङ्ख ऋषिरनुष्टुप् छन्दः पितरो देवताः पित्राद्यावाहने वि०।

ओं उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि।

उशन्नुशत आवह पितॄन् हविषे अत्तवे (१)। (य० १९अ० ७० म०)

इति सकृज्जप्त्वा सामगस्तु "एत पितर इत्यादि (पृ३४०) वक्ष्यमाणं जप्त्वा तेषां पुरस्तात् तिलकुशानुत्सृज्य कृताञ्जलिर्भूत्वा

---

(१) हे अग्ने! उशन्तः कामयमानाः वयं त्वा त्वां निधीमहि स्थापयामः। उशन्त एव वयं त्वा समिधीमहि सन्दीपयामः। त्वञ्च उशन् कामयमानः सन् उशतः कामयमानान् पितॄन् हविषे अत्तवे हविरत्तुमावह आनय। अत्तवे इत्यत्र तुमर्थे तवेप्रत्ययः।

आयान्तु न इत्यस्य शङ्ख ऋषिस्त्रिष्टुप् छन्दः पितरो देवतास्तत्प्रार्थने विनियोग इति स्मृत्वा।

ओं आयान्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः। अस्मिन् यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेऽवन्त्वस्मान् (१)। ( य० १६ अ० ५८ म० ) इति सकृज्जपेत्। एवं मातामहपक्षेऽपि

ततः पित्रादिविप्राग्रतः समूलं साग्रं कुशपत्रद्वयं दक्षिणाग्रं भूमौ स्थापयित्वा तस्योपरि मूले पितुः, मध्ये पितामहस्य, अग्रे प्रपितामहस्य, खड्गरजतादिनिर्म्मितमर्घपात्रं निधाय प्रत्येकं प्राग्वत् ओं पवित्रे स्थो वैष्णव्याविति पठित्वा नखव्यतिरेकेण पवित्रे छित्त्वा प्राग्वत् ओं विष्णोर्मनसापूते स्थ इत्यनेन साग्रे कुशपत्रद्वयात्मकपवित्रे प्रत्येकं पूते कृत्वा दक्षिणाग्रे स्थापयित्वा प्रत्येकं पठितेन शन्नो देवीरित्यादिना ( ३६पृ० ) तेषु पात्रेषु जलं दत्त्वा तिलान् गृहीत्वार्घ्यादिकं स्मृत्वा अयं मन्त्रः पाठ्यः।

---

( १ ) अग्निष्वात्ताः अग्निना स्वत्ताः श्रौतयज्ञादिभिस्तृप्ता नाग्निना तर्पिता इत्यर्थः सौम्यासः सोम्याः सोमपानार्हाः नोऽस्माकं पितरः, देवैः सह यान्ति पितरो येषु तैर्देवयानैः पथिभिर्मार्गैः आयान्तु आगच्छन्तु, आगताश्च ते पितरः अस्मिन् यज्ञे स्वधया अन्नेन मादयन्तस्तृप्यन्तोऽस्मान् अधिब्रुवन्तु अधिकान् वदन्तु तद्वाक्येन सर्व्वथाधिका भवेमेत्यर्थः अस्मान् अवन्तु पालयन्तु।

तिलोऽसीत्यस्य प्रजापतिर्ऋषिरनुष्टुप् छन्दस्तिलो देवता पितृपात्रे तिलदाने विनियोग इति स्मृत्वा।

ओँ तिलोऽसि सोमदैवत्यो गोषवो देवनिर्म्मितः।

प्रत्नमद्भिः पृक्तः स्वधया पितॄन् लोकान् प्रीणाहि नः स्वाहा (१)।

इति प्रत्येकमुच्चार्य्य तेषु तिलान्, तूष्णीं दूर्व्वागन्ध-पुष्पाक्षतादिकं, च दत्त्वा कुशान्तरेणाच्छादयेत्। एवं पितामहादीनामपि। ततः ओँ अच्छिद्राणि अर्घपात्राणि सन्त्विति प्रश्ने ओँ सन्त्वच्छिद्राणीति द्विजप्रत्युक्तौ कुशा-च्छादनमुत्सार्य्य पाणिद्वयेन धृत्वा अमुकगोत्र! वसुरूप! पितरमुकदेवशर्म्मन्! एष तेऽर्घः स्वधेति निवेद्य द्विजाग्रे भूमौ निधाय द्विजहस्ते जलासिक्ते पवित्रे, जलं, पुष्पं, पुष्पान्तरं च दत्त्वा पितृभ्यः स्वधायिभ्यः (२८, २९४०) इत्यनेन द्विजं पुष्पतिलैरभ्यर्च्यार्घपात्रं वामहस्तेनादाय दक्षिणहस्तेनाच्छाद्य

या दिव्या इति (३७४०) मन्त्रान्ते पुनर्नामगोत्रो-ल्लेखनपूर्व्वकं पित्रे दद्यात्। एवं पितामहादिभ्यां

(१) गोषवः दातः स्वर्गप्रसवकारी देवनिर्म्मितः विष्णुनिर्म्मितः सोमदैवत्यस्तिलोऽसि भवसि। त्वञ्चाद्भिर्जलैः पृक्तः सिक्तः सन् नोऽस्माकं पितॄन् लोकान् पितृपितामहादीन् स्वधया स्वधाकारेण स्वधादत्तान्नेन वा प्रत्नं चिरकालं प्रीणाहि प्रीतान् कुरु स्वाहेति तिलत्यागः गोषव इत्यत्र गोसव इति गौड़ाः पठन्ति।

क्रमेण दद्यात्। सामगास्तु अर्घ्यं स्वधेति वाक्यान्ते ये चात्रेत्यादि पठित्वा दद्युरिति विशेषः।

एवं मातामहादीनामपि। तद्विप्रार्च्चने तु नमो वः पितर इत्यादि मन्त्रः प्राग्वत् (२८९०) पाद्य इत्येव भेदः। अन्यत् सर्व्वं समानम्। एकैकार्घदानानन्तरञ्च जलस्पर्शः। अर्घजलदाने च किञ्चिदवशिष्टं त्वरत् जलं स्थापयेत्। तज्जलसहितञ्चार्घपात्रं यथास्थानं स्थापयेत् ततः पितामहादिपात्रसंस्रवं पितृपात्रे संभृत्य प्राङ्मुखो यज्ञोपवीती यजमानः स्वयमन्यो वा

ओं आपः शिवा इत्यस्य प्रजापतिर्ऋषिर्गायत्री छन्द आपो देवता अभिषेके विनियोग इति स्मृत्वा।

ओं आपः शिवाः शिवतमाः शान्ताः शान्ततमास्तथा।
तास्ते कृण्वन्तु भेषजम् (१)।

इत्यनेनाभिषिञ्चेत्। ततः प्राचीनावीती द्विजप्रदेशादुत्तरतः किञ्चिद्दूरे निःसञ्चारप्रदेशे

ओं शुन्धन्तां लोकाः पितृषदनाः

इत्यनेन जलैरभ्युक्ष्य

ओं पितृषदनमसीति

दक्षिणाग्रान् दर्भानास्तीर्य्य

ओं पितृभ्यः स्थानमसीति।

---

(१) ता आपस्ते तव यजमानस्य भेषजमारोग्यं कृण्वन्तु कुर्व्वन्तु अन्यत् स्पष्टम्।

पितृर्घपात्रमुत्तानं कृत्वा दक्षिणाग्रं निधाय तदुपरि प्रपितामहपात्रं न्युब्जीकृत्य स्थापयित्वा दक्षिणाग्रकुश-पत्रत्रयेण संच्छाद्य गन्धपुष्पैरर्चयेत्।

तच्च पात्रं भूमावेव न्युब्जीकर्त्तव्यं न पीठादेरुपरि, तथास्थितञ्चा श्राद्धसमाप्तेर्नोत्तानीकुर्य्यात् नान्यत्र नयेत् नापि स्पृशेत्।

ततो द्विजहस्ते जलं दत्त्वा गन्धादिकं धृत्वा अमुक-गोत्र! वसुरूप! पितरमुकदेवशर्म्मन्! एतानि ते गन्धपुष्प धूपदीपाच्छादनादीनि स्वधेति वाक्यमुच्चार्य्य गन्धपुष्प-धूपदीपवस्त्रच्छत्रोपानत्कमण्डलुप्रभृतीनि पितुरात्मनश्च प्रियाणि वस्तूनि यथाविभवं दद्यात्। गौड़ास्तु तन्त्रेण पित्रादिभ्यः एकवाक्यप्रयोगेणैव दद्यादिति वदन्ति। एवं मातामहादिभ्योऽपि तत्तद्द्रव्याणि दद्यात्। असम्भवे गन्धादिपञ्चकमात्रदानम्। एष ते गन्ध इत्यादिना प्रत्येकद्रव्यदानान्ते जलस्पर्शः। सुगन्धोऽस्तु, सुपुष्प-मस्त्वित्यादिक्रमेण च प्रतिवचनम्।

गौड़ास्तु दैवे आसनदानानन्तरमावाहनं ततः पैत्रे आसनदानावाहने, मातामहादीनामपि तथैवाचरन्ति। एवं दैवार्घदानानन्तरमेव पित्राद्यर्घदानमेवं गन्धादि-दानान्यपि तत्क्रमेणैवाचरन्ति। अत्राचार एवान्यत-रपक्षाश्रयणे मूलम्। प्रतीच्यास्तु, सर्व्वत्र दानवाक्यान्ते इदं पित्रे न ममेति वाक्यं प्रयुञ्जते।

एवं पितृपक्षस्य मातामहपक्षस्य च गन्धादिदानं समाप्य कृताञ्जलिर्भूत्वा भवत्प्रसादात् पैतृकमर्च्चनं संपूर्णमस्तु इति पैतृकादिद्विजान् प्रार्थयेत। अस्तु संपूर्णमिति द्विजप्रत्युक्तौ सङ्कल्पसिद्धिरस्त्विति भवन्तोऽधिब्रुवन्त्विति वदेत्। अस्तु संकल्पसिद्धिरिति द्विजप्रत्युक्तौ यस्य स्मृतेत्यादि (३०पृ०) प्रागुक्तं पठेत्। इति पित्राद्यासनार्घगन्धादिदानकर्म्मकाण्डम्।

ततः ओं भोजनपात्रं पातयिष्य इत्युक्ते ओं पातयेति प्रतिवचने द्विजाग्रेषु भोजनपात्राधारस्थानेषु तण्डुलपिष्टरेखाभिः चतुरस्राणि मण्डलानि कुर्य्यात्। तत्र दैवे ऐशानीमारभ्य पूर्व्वाग्रे द्वे मण्डले, पैत्रे तु नैर्ऋतीमारभ्य दक्षिणाग्राणि षड्मण्डलानि कार्य्याणि। तत्र च दैवे स्वर्णमयादीनि, पैत्रे राजतादीनि, असम्भवे कदलीत्वङ्मयानि सर्व्वत्र पात्राणि स्थापयेत्। अपहता इत्यस्य प्रजापतिर्ऋषिः असुरा देवता रक्षोनिवारणे वि०॥

ओं अपहता असुरा रक्षांसि वेदिषदः (य० २ म० २९)(१) इत्यनेन दैवे यवान्, पैत्रे पात्रे च तिलान्, विकीर्य्य जलमुपस्पृशेत्।

ततः [illegible] पात्रे सतिलकुशे घृतयुतमोदनं निधाय सकुशपात्रान्तरेण पिधाय पाणिभ्यामुद्धृत्य ओं अग्नौ

(१) वेद्यां सीदन्तीति वेदिषदोऽसुराः रक्षांसि च वेदीसकाशाद-पहता अपगताः सन्त्विति शेषः।

करिष्ये इति पृच्छेत् ओं कुरुष्वेति प्रत्युक्ते अग्नये इत्यादिकयोः प्रजापतिर्ऋषिः विश्वे देवा देवता अग्नौ करणहोमे विनियोग इति स्मृत्वा ।

ओं अग्नये कव्यवाहनाय स्वाहा,

ओं सोमाय पितृमते स्वाहा,

(य० २ अ० २९ म०) (१) इत्येताभ्यां सामगस्तु

ओं स्वाहा अग्नये कव्यवाहनाय,

ओं स्वाहा सोमाय पितृमते

इत्येताभ्यां द्वे आहुती विप्रहस्ते जले वा सकुशेन दक्षिणपाणिना पितृतीर्थेन दत्त्वा तूष्णीं द्विर्जुहुयात् । हुतशेषं पित्रादिद्विजपात्रेषु त्रिवारं दद्यात् । एवं मातामहादिपात्रेष्वपि । शेषं पिण्डार्थं स्थापयेत् । दैवे तु अन्यदेवान्नं दद्यादिति हेमाद्रिः । हुतशेषादेव वारद्वयं दद्यादिति हलायुधादयः । यथाचारं समाचरेत् । ततोऽग्नौ हुतं सुहुतमस्तु इत्युक्ते सुहुतमस्त्विति प्रत्युक्तिः ।

ततो दैवद्विजपात्रमधोमुखेन पैतृकपात्रन्तूत्तानेन स्वस्तिकाकृतिना हस्तद्वयेन धृत्वा

पृथिवीत्यस्य प्रजापतिर्ऋषिरमृतं देवता तत्पात्रसंस्कारे विनियोग इति स्मृत्वा

---

(१) कवयः क्रान्तदर्शिनः पितरस्तत्सम्बन्धि कव्यं तद्वाहनाय तत्प्रापकाय कर्त्तरि ल्युः । अग्नये स्वाहा तस्मै हविर्हुतमित्यर्थः । पितृमान् पितृयुक्तस्तस्मै सोमाय तन्नामकाय देवाय स्वाहा सुहुतमस्तु ।

ओं पृथिवी ते पात्रं द्यौः पिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहा (१) इति मन्त्रं सर्व्वत्र जपेत्। ततो दैवादिक्रमेणान्नव्यञ्जनादिकं सर्व्वप्रकार-मन्नं सौवर्णादिद्रव्यैः अभावे पर्णेन कुशेन वा दक्षिण-पाणिना यजमानः स्वयं पत्न्या वा परिवेषयेत्। ततो दैवे ओं विष्णो हव्यमिदं रक्षस्व (२) इति, पैत्रे तु ओं विष्णो कव्यमिदं रक्षस्वेति विप्रदक्षिणाङ्गुष्ठं कुशविप्रे तु स्वाङ्गुष्ठम्, इदं विष्णुरित्यस्य मेधातिथिर्ऋषिर्गायत्री छन्दो विष्णुर्देवतान्नरक्षणे विनियोग इति स्मृत्वा।

ओं इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढ़-मस्य पांसुले (३) (य० ४ अ० १५ म०)

इत्यनेनान्नोपरि निवेशयेत्।

---

(१) हे हुतावशेष ! विश्वाधारोऽपि पृथिवी ते तव पात्रमाधारः द्यौः सर्व्वव्यापकाकाशश्च ते तव पिधानमतोऽग्निरूपस्य ब्राह्मणस्य अमृते अविनष्टे अन्यभक्षणाद्यदूषिते अमृतं हुतशेषं त्वां जुहोमि तस्मै स्वाहा इदममृतं दत्तमित्यर्थः।

(२) "अङ्गुष्ठमात्रो विष्णुरसुरान्निहन्तीति" स्मृतेरङ्गुष्ठमात्रतया ध्यातव्यस्य विष्णोर्न्निकटेऽसुराद्रक्षणप्रार्थनम्।

(३) विष्णुर्व्यापकोऽपि त्रिविक्रमावतारी भूत्वा इदं विश्वं विच-क्रमे विविधं क्रान्तवान्। तदेवाह त्रेधा पदं निदधे भूमावेकमन्तरिक्षे द्वितीयं दिवि तृतीयमिति क्रमादग्निवायुसूर्य्यरूपेण त्रिधावस्थानात् व्याप्तवानित्यर्थः। पांसवो भूम्यादयः एव लोकाः पांसुतुल्या यस्येति अस्त्यर्थे लच् प्रत्ययः। तस्मिन् पांसुले अस्य विष्णोः पदे समूढ़मन्तर्भूतं विश्वमिति शेषः।

एवं प्रत्येकपात्रेषु कुर्य्यात्। ततो दैवे यवोऽसीत्यनेन यवान्, पैत्रे तिलोऽसीत्यनेन तिलांश्च अपहता इत्यादिना दद्यात्। सामगास्तु यवदाने

ओं यवोऽसि यवयास्मद्द्वेषोऽरातीर्द्दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वा

शुन्धन्तां लोकाः(१) पितृषदनाः पितृषदनमसीति

अधिकं पठन्त्येवमन्यत्रापि। ततः सन्ध्यावन्दनादि कृत्वा सप्रणवां गायत्रीं जप्त्वा ब्राह्मणेभ्यो जलं दत्त्वा दैवे कुशत्रयमादाय ओं पूरूरवार्द्रवः संज्ञका! विश्वे! देवा! एतदन्नं सोपकरणं सयवगङ्गोदकं वो नम इत्युत्सृजेत्। तीर्थयात्राङ्गश्राद्धे तु घृतस्यैव प्राधान्येन अन्नाद्युपस्करसहितमिदं घृतं वो नम इति वदेत्। इत्यमन्नमुत्सृज्य प्रत्येकं द्रव्याणि दर्शयेत् यथा इदमन्नं इमा गङ्गाया आप एतानि हवींषि एतानि उपकरणानियथासुखं वाग्यतौ स्वदतमिति वदेत्। ततो ब्राह्मणाभ्यां जलगण्डूषं दद्यात्। ततः पैत्रविप्रेषु जलं दत्त्वा सप्रणवां गायित्रीं जप्त्वा मोटकमादाय अमुकगोत्र! वसुरूप! पितरमुकदेवशर्म्मन्नेतत्ते सोपकरणमन्नं सतिलगङ्गोदकं तुभ्यं स्वधा इति प्रत्येकं द्रव्यदर्शनं तीर्थश्राद्धे तु

---

(१) लोकाः दिवे स्वर्गाय पितृनिवासदानाय अन्तरिक्षाय तद्यानाय पृथिव्यै तद् प्राप्त्यै त्वा त्वां शुन्धन्तां शोधयन्तु त्वं पितृषदनं पित्राधारोऽसि त्वदाधारे तेषामुपास्यत्वात् तव पितृषदनत्वमन्यत् व्याख्यातम्।

घृतस्य प्रधानतयोल्लेखः। एवं पितामहादिविप्रेभ्योऽप्यन्न-मुत्सृजेत्।

तत्र पितृपितामहादीनेकवाक्येनैवोल्लिख्य दद्यादिति गौड़ाः। सर्व्वत्र मधुसूक्तं पठित्वा मधु मधु मधु इति त्रिर्व्वदेत्। तत्रादौ तत्सूक्तस्यर्ष्यादिकं स्मरेद्यथा। मधुवाता इत्यादि तृचस्य गौतम ऋषिर्गायत्रीछन्दो विश्वे देवा देवता अन्ने मधुघृताभ्यञ्जने विनियोग इति।

ओं मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः। माध्वीर्नः सन्त्वोषधीः (१)। मधु नक्तमुतोषसो मधुमत् पार्थिवं रजः। मधु द्यौरस्तु नः पिता (२)। ओं मधु-मान्नो वनस्पतिर्म्मधुमां अस्तु सूर्य्यः। माध्वीर्गावो भवन्तु नः (३) (१) (य०१३ अ० २७, २८, २९ म०) इति मधुसूक्तम्।

ततः सतिलकुशकुसुमं जलमादाय ये चेहेतत्रोस्य

---

(१) वाताः ऋतं यज्ञमयन्तीति तस्मै ऋतायते यजमानाय मधु मधु-मन्तः सन्तु। सिन्धवो नद्यः यजमानाय मधु क्षरन्ति क्षरन्तु। ओषधी-रोषध्योऽपि नोऽस्माकं माध्वीर्म्मधुयुक्ताः सन्तु।१। नोऽस्माकं नक्तं रात्रिं मधु मधुमत् मधुररसोपेतमानन्दकरमस्तु। उत अपि च उषसो दिवसा अपि मधुमन्तः सन्तु। पार्थिवं रजः पृथिवीलोको मातृभूतो मधुमदस्तु तथा पिता पितृलोकोद्यौर्द्युलोको मधु मधुमत्यस्तु।२। नोऽस्माकं वनस्पतिरश्वत्थादिर्म्मधुमान् रसवान् यज्ञसाधनीभूतोऽस्तु सूर्य्यः मधुमान् सन्तापराहित्यलक्षणसुखदोऽस्तु। गावः सूर्य्यरश्मयः कर्म्म-साधनतया माध्वीर्म्मधुयुता नोऽस्माकं भवन्तु।३।

प्रजापतरश्विसरस्वतत्र ऋषयस्त्रिष्टुप् छन्दः पितरो देवतास्तत्प्रार्थने विनियोग इति स्मृत्वा

ओं ये चेह पितरो येच नेह यांश्च विद्म याँ उ च न प्रविद्म।

त्वं वेत्थ यति ते जातवेदः स्वधाभिर्यज्ञं सुकृतं जुषस्व(१)

(य० १९ अ० ६७ क०)। इत्यभिपूज्य पितृभ्यः स्वधायिभ्य इत्यादिना (२८पृ०) प्रागुक्तेन जलं दत्त्वा पित्रादिद्विजान् प्रति "यथासुखं जुषध्वमिति" ब्रुवन् प्रणमेत्। अनन्तरम्

पिता पितामहश्चैव तथैव प्रपितामहः।
तृप्तिं प्रयान्तु मे भक्त्या यन्मयैतदुदाहृतम्।
मातामहस्तृप्तिमुपैतु मेऽद्य
तथा पिता तस्य पिता च तस्य।
विश्वे च देवाः परमां प्रयान्तु
तृप्तिं प्रणश्यन्तु च यातुधाना इति
ओं यज्ञेश्वरो हव्यसमस्तकव्य
भोक्ताव्ययात्मा हरिरीश्वरोऽत्र।

---

(१) ये पितर इह लोके वर्त्तन्ते ये च इह न, यांश्च पितॄन् वयं विद्म जानीमः उ पादपूरणे। यांश्च न प्रविद्म। हे जातवेदः! ते पितरो यति यावन्तो वर्त्तन्ते तान् त्वं वेत्थ जानासि। किञ्च स्वधाभिः पितॄणामन्नैः सुकृतं त्वं जुषस्व सेवस्व। एष च मन्त्रः सामगेन न पठ्यते।

तत्सन्निधानादपयान्तु सद्यो
रक्षांस्यशेषाण्यसुराश्च सर्वे ॥

इति च कृताञ्जलिरुदाहरेत् ।

अथ भुञ्जानेषु विप्रेषु यज्ञोपवीती दक्षिणामुखः सप्रणवां सव्याहृतिकां गायत्रीं त्रिः सकृद्वा, पवित्रसूक्तादीनि च पठित्वा श्रावयेत् ।

तानि च कृणुष्वपाज इत्यादिपञ्चर्चम् (१)। सहस्रशीर्षेत्यादि षोड़शर्चम् (२)। नमस्ते रुद्र मन्यव इत्यादि षोड़शर्चम् (३)। इतिहासा हविःस्तोत्रादीनि च। विस्तरभयात्तु तान्यत्र नोद्धृतानि। गौड़ास्तु ततः कृताञ्जलयः।

अन्नहीनं क्रियाहीनं विधिहीनञ्च यद्भवेत् ।
तत्सर्वमच्छिद्रमस्त्विति
प्रार्थ्य गायत्रीं मधुसुक्तञ्च जप्त्वा
ओं योगीश्वरं याज्ञवल्क्यं संपूज्य मुनयोऽब्रुवन् ।
वर्णाश्रमेतराणां नो ब्रूहि धर्म्मानशेषतः ।
मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिराः ।
यमापस्तम्बसंवर्त्ताः कात्यायनवृहस्पती ।
पराशरव्यासशङ्खलिखिता दक्षगौतमौ ।
शातातपो वसिष्ठश्च धर्म्मशास्त्रप्रयोजकाः ।

---

(१) मत्कृततुलादानादिपद्धतौ (१४प० २पृ० ) द्रष्टव्यम् ।

(२) मत्कृततुलादानादिपद्धतौ (११४,११५प०१,२,१पृ०)

(३) मत्कृततुलादानादिपद्धतौ (११५,११६प० १,२,१पृ०)

इति याज्ञवल्क्यीयम्,

तद्विष्णोरित्यस्य मेधातिथिर्ऋषिर्गायत्री छन्दो विष्णुर्देवता तदुपस्थाने विनियोग इति स्मृत्वा

ओं तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम् (१)। (य० ६अ० ५म०) इति मन्त्रम् ततः

ओं दुर्य्योधनो मन्युमयो महाद्रुमः
स्कन्धः कर्णः शकुनिस्तस्य शाखा।
दुःशासनः पुष्पफले समृद्धे
मूलं राजा धृतराष्ट्रो मनीषी॥
ओं युधिष्ठिरो धर्म्ममयो महाद्रुमः
स्कन्धोऽर्ज्जुनो भीमसेनोऽस्य शाखा।
माद्रीसुतौ पुष्पफले समृद्धे
मूलं कृष्णो ब्रह्म च ब्राह्मणाश्च।

इति भारतीयगाथाम्

ओं सप्त व्याधा दशार्णेषु मृगाः कालाञ्जरे गिरौ।
चक्रवाकाः शरद्वीपे हंसाः सरसि मानसे।
तेऽभिजाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः।
प्रस्थिता दूरमध्वानं यूयं तेभ्योऽवसीदत।

---

(१) सूरयो विद्वांसः वेदान्तज्ञाः दिवि हार्दाकाशे निरावरणे वा आततं व्याप्तं चक्षुः सूर्य्यमिव प्रकाशकं विष्णोस्तत् परमं पदं स्वरूपं सदा पश्यन्ति।

इति हविःस्तोत्रञ्च पठित्वा रुचिस्तवादिकं पठन्ति। तच्च विस्तरभयान्नोक्तम्।

ततो दैवपैत्रब्राह्मणयोर्मध्ये हस्तमात्रान्तरे देशे नैर्ऋत्यां कुशानास्तीर्य्य सतिलमुदकं निषिच्य सर्व्वप्रकार-मन्नमेकस्थं कृत्वा सतिलसलिलकुशं गृहीत्वा

ओँ अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम।
भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम्।

इति पितृतीर्थेन तदन्नं विकीर्य्य कृताञ्जलिर्भूत्वा,

ओँ येषां न माता न पिता न बन्धु-
र्नैवान्नसिद्धिर्न तथान्नमस्ति।
तत्तृप्तयेऽन्नं भुवि दत्तमेतत्
प्रयान्तु लोकाय सुखाय तद्वत्॥

इति पठित्वा हस्तौ प्रक्षाल्य दक्षिणश्रवणं स्पृष्ट्वाचामेत्। ततो दैवादिक्रमेण ब्राह्मणेभ्यो जलं दत्त्वा गायत्रीं मधु॰ सूक्तञ्च प्राग्वत् जपेत्। दैवे ओँ रुचितमिति प्रश्नः, ओँ रुचितमिति प्रतिवचनम्। पैत्रे तु ओँ तृप्ताः स्थ इति द्विजान् पृच्छेत्। ते च ओँ तृप्ताः स्म इति प्रति-वदेयुः। कुशविप्रेष्वेतन्नास्तीति गौड़ाः। ततः पिण्डपर्य्याप्तं सर्व्वप्रकारमन्नमेकपात्रे समुद्धृत्य ओँ शेषमन्नमप्यस्ति किं क्रियतामिति प्रश्नः। इष्टैः सह भुज्यतामिति द्विजप्रति-वचनम्। ओँ पिण्डदानमहं करिष्ये इत्युक्तौ ओँ कुरु-ष्वेति प्रतिवचनम्।

ततः पिण्डदानमारभमाणः द्विजोच्छिष्टादुत्तरतो व्याममात्रात् परतो गोमयोपलिप्तायां भुवि निहन्मि सर्व्वमित्यादिना विघ्नानुत्सार्य्य कराभ्यां धृतकुशमूलेन निहन्मीत्यादिना अपहता इत्यादिना च नैर्ऋतीमारभ्य दक्षिणाग्रया रेखया चतुरस्रमण्डलमेकं कृत्वा तत्पूर्व्वतो द्वितीयं तत्पूर्व्वतश्च तृतीयं कुर्य्यात्।

एवं मातामहादीनामपि मण्डलत्रयं कुर्य्यात्। ततः प्रत्येकं पिण्डस्थानं तिलोदकैरभ्युक्ष्य सतिलकुशानास्तीर्य्य देवताभ्य इति पठित्वा सतिलान् गृहीत्वा आयान्तु न इत्यादिना (४०पृ ३पं०) प्रागुक्तमन्त्रेण पितॄनावाहयेत्। सामगस्तु

ओं एत पितरः सोम्यासो गम्भीरेभिः पथिभिः पूर्व्विणेभिः।

दत्तास्मभ्यं द्रविणे ह भद्रं रयिञ्च न सर्व्ववीरं नियच्छत (१)। (छा० ब्रा० २प्र० ३क०)

इत्यनेनावाहयेत्। एवं प्रथममप्यनेनाप्यावाहयति (२) तत्र चेमं मन्त्रं उशन्त इत्यस्मात् पूर्व्वमेव

(१) सोम्यासः सौम्याः सोमदेवताकाः पितरः गम्भीरेभिः गम्भीरैर्दुरवगाहैः पूर्व्विणेभिः पूर्व्वैः पुर्व्वगतानुसारिभिः पथिभिः मार्गैः एत आगच्छत आगतास्मास्मभ्यं द्रविणे (ह प्रसिद्धे) भद्रं कुशलं दत्त चन अपि च सर्व्ववीरं सर्व्ववीर्य्यसाधनं रयिं धनं बलं वा नियच्छत निधत्त। रूपसिद्धिश्छान्दसी।

(२) एवं देवविप्रस्यावाहनादनन्तर प्रार्थनायामपि। ओं ओषधयः

पठति । ततो मोटकं गृहीत्वा अमुकगोत्र ! वरुणरूप ! पितरमुकदेवशर्म्मन् ! एतत्तेऽवनेनिक्ष्व स्वधेति प्रथम-रेखायां पात्रान्तरच्युतेन तिलोदकेन पितृस्थानमवने-निज्यात् । एवं प्रजापतिरूपं पितामहं, अग्निरूपं प्रपितामहं वरुणप्रजापत्यग्निरूपांश्च मातामहादीन् गोत्रनामभ्यामुल्लिख्यावनेनिज्यात् ।

ततो दक्षिणाग्रान् कुशानास्तीर्य्य सतिलजलैरभ्युक्ष्या-वनेजनक्रमेण कपित्थविल्वकुक्कुटाण्डामलकतुल्यान् यथा-शक्ति सर्व्वप्रकारकान्नेन पितृतीर्थेन दक्षिणहस्तेन पित्रा-दिभ्यः पिण्डान् दद्यात् । यथा अन्नं गृहीत्वा मधुवाता इत्यादि तृचं पठित्वा मोटकतिलतुलसीमधुसर्पिर्युक्तं कृत्वा ओं अमुकगोत्र ! वरुणरूप ! पितरमुकदेवशर्म्मन् ! एतत्ते पिण्डं स्वधेत्यभिधाय यजुर्वेदी दद्यात् । सामगबह्वृचौ तु मधुसूक्तं पठित्वा अक्षन्नित्यादि मन्त्रस्य गौतम ऋषिः पङ्क्तिश्छन्दः इन्द्रो देवता पितृयज्ञे विनियोग इति स्मृत्वा

ओं अक्षन्नमीमदन्त ह्यवप्रिया अधूषत अस्तोषत। स्वभानवो विप्रा नविष्टया मती योजा न्विन्द्र ! ते हरि(१)

---

कममदन्त सोमेन सह राज्ञा यस्मै कृणोति ब्राह्मणस्त्वं राजन् ! पारया-नसि । (ऋ० १० म ६७ सू० २२ म०) । अयमपि सामगैः पाठ्यः ।

(१) हे इन्द्र ! त्वया दत्तान्यन्नानि अक्षन् भुक्तवन्तः यजमाना भुक्त्वा चामीमदन्त हि तृप्ताश्चाभवन् । प्रियाः स्वकीयास्तनूरधूषत अकम्पयन् अनन्तरं स्वभानवः स्वायत्तदीप्तयो विप्रा मेधाविनः नविष्टया अविष्टमत

(ऋ० म० ८२सू० २म०) इत्यग्रे पठित्वाऽभिलापवाक्यान्ते दद्याताम्। दानवाक्ये तु एष ते पिण्ड इति भेदः। तत्रापि सामगानां वाक्यान्ते ये चात्रेत्यादियोजना प्राग्वत्।

एवं पितामहादीनामपि पूर्व्वोक्तप्रजापत्यादिरूपेण ध्यातानां नामगोत्रोल्लेखपूर्व्वकं पिण्डान् दद्यात्। पाश्चात्त्यास्तु गयायामेव पिण्डशब्दं प्रयुञ्जते अन्यत्रान्नशब्दम्। ततः पिण्डान्तिके पिण्डशेषं विकीर्य्य पिण्डोपरि कुशान् निधाय परिस्तरणकुशमूलेषु हस्तावघर्षणेन ओं लेपभुजः पितरः! प्रीयन्तामिति लेपोन्मार्ज्जनं कुर्य्यात्। ततः कृताञ्जलिर्भूत्वा अत्र पितर इत्यादिकस्य प्रजापतिर्ऋषिः पितरो देवताः पिण्डपितृयज्ञे विनियोग इति स्मृत्वा

ओं अत्र पितरोमादयध्वं यथाभागमावृषायध्वम्(१)। (य०२अ०३०॥क०) इत्यर्द्धमुच्चार्य्य प्रदक्षिणं पराङ्मुखोऽपावृत्योदङ्मुखः पितॄन् ध्यायन् प्राणानायम्य मुक्तोच्छ्वासस्तेनैव पथा परावृत्य

---

मया मती मत्या स्तुत्या अस्तोषत अस्तुवन्। हे इन्द्र! ते हरी त्वदीयावश्वौ नु क्षिप्रं योज योजय। रूपसिद्धिश्छान्दसी।

(१) हे पितरः अस्मिन् वर्हिषि मादयध्वं हृष्टा भवत। ततो वर्हिषि यथाभागं स्वं स्वं भागमनतिक्रम्य आवृषायध्वं समन्तात् वृषवदाचरत। यथा वृषः स्वाभीष्टं घासं प्राप्य तृप्तिमत्यन्तां करोति तथा कुरुतेत्यर्थः।

ओँ अमीमदन्त पितरो यथाभागमावृषायिषत(१)। (य० २अ० ३१क० ) इत्युत्तरार्द्धमुच्चार्य्य शनैरुच्छ्वस्य पूर्व्ववत् (५४पृ०) सतिलोदकं पिण्डोपरि अवनेजनं दद्यात्। यजुर्वेदी तु प्रत्यवनेनिक्ष्व स्वधेति वदेत्।

ततो नीविं विसृज्य नमो वः पितरो रसायेत्यादिभिः नमो वः पितरो मन्यवे इत्यन्तैः (७२पृ० २प०) प्रागुक्तैः षड्भिर्यजुर्भिरञ्जलिबन्धेन नमस्कुर्य्यात्। गौड़ास्तु

ओँ वसन्ताय नमस्तुभ्यं ग्रीष्माय च नमो नमः।

वर्षाभ्यश्च शरत्संज्ञऋतवे च नमः सदा।

हेमन्ताय नमस्तुभ्यं नमस्ते शिशिराय च।

माससंवत्सरेभ्यश्च दिवसेभ्यो नमो नमः।

इत्येव पठित्वा ऋतुरूपान् पितृन् नमस्कुर्व्वन्ति। तत ऋष्यादिकं (७२पृ० १प०) पूर्व्ववत् स्मृत्वा

ओँ नमो वः पितरः! पितरो! नमोवः।

गृहान्नः पितरः! सतो वः पितरो! देष्म (य०२अ० ३२क० (२)। इत्याशिषं प्रार्थ्य तथैवार्घ्यादिकं स्मृत्वा

---

(१) यान् पितॄन् प्रति, मादयध्वमित्युक्तं ते पितरः अमीमदन्त हृष्टाः अभवन्। यथाभागं स्वं स्वं भागमनतिक्रम्य चावृषायियत समस्तात् वृषवदाचरितवन्तः।

(२) हे पितरः! एवंविधऋतुरूपेभ्यो वो नमः। अभ्यासस्त्वादरातिशयार्थः। हे पितरः! नोऽस्मभ्यं गृहान् भार्य्यापुत्रपौत्रादीन् दत्त।

ओं एतद्वः पितरो ! वासः (य०२अ०३२क०) (२)।

इत्युक्त्वा सूत्रादिरूपं पिण्डाच्छादनं वासो दत्त्वा ओं अमुकगोत्र ! वसुरूप ! पितरमुकदेवशर्म्मन् ! एतत्ते वासः स्वधा इत्यभिलप्य दद्यात्। एवं पितामहादीनामपि। गौड़ास्तु वस्वादिरूपतया सर्व्वत्रैव तान् ध्यायन्ति। तेषां शास्त्रोक्तानि ध्येयरूपाणि यथा

प्रसन्नवदनाः सौम्या वरदाः शक्तिपाणयः।
पद्मासनस्था द्विभुजा वसवोऽष्टौ प्रकीर्त्तिताः(वसूनाम्)
करे त्रिशूलिनो वामे दक्षिणे चाक्षमालिनः।
एकादश तु ध्यातव्या रुद्रास्त्वर्द्धेन्दुमौलयः (रुद्राणाम्)
पद्मासनस्था द्विभुजाः पद्मगर्भाङ्गकान्तयः।
करादिस्कन्धपर्य्यन्तं नालपङ्कजधारिणः।
इन्द्राद्या द्वादशादित्यास्तेजोमण्डलमध्यगाः (आदित्यानाम्)।
नागपाशधरो रक्तभूषणो वाहिनीपतिः।
वरुणोऽम्बुपतिः स्वर्णवर्णोमकरवाहनः।
(वरुणस्य) (प्रजापतेस्तु)
यज्ञोपवीती हंसस्थ एकवक्त्रश्चतुर्भुजः।

---

हे पितरः ! सतो विद्यमानात् धनादिति शेषः देष्म वो युष्मभ्यं ददाम ददतामस्माकं कदाचित् धनक्षयो मा भूदित्यर्थः।

(२) हे पितरः ! वो युष्मभ्यमेतद्वासः सूत्रमेव परिधानम्।

अक्षं स्रुचं स्रुवं बिभ्रत् कुण्डिकां च प्रजापतिः।
छागस्थः साक्षसूत्रोऽग्निः सप्तार्च्चिः शक्तिधारकः।
चिह्नितं चमरेणास्य करमन्यं प्रकल्पयेत्। (अग्नेः)
इत्येवं मतभेदेन ध्यात्वा गन्धादिभिः पूजयेत्।

ततः प्रथमं पैत्रे, ततो दैवे द्विजेभ्य आचमनीयं दत्त्वा ओँ सुसम्प्रोक्षितमस्त्विति श्राद्धदेशं संप्रोक्ष्य द्विजेभ्यः पवित्रान्तरं दत्त्वा ओँ शिवाः आपः सन्तु इति द्विजेषु जलं दद्यात् ओँ सन्त्विति द्विजप्रत्युक्तिः। ओँ सौमनस्यमस्तु इति पुष्पाणि दद्यात्। ओँ अस्तु सौमनस्यम्, इति द्विजप्रत्युक्तिः।

ओँ अक्षतं चारिष्टं चास्तु इत्यक्षतान् प्रक्षिपेत् ओँ अस्त्वरिष्टम् इति प्रत्युक्तिः। ततो द्विजेभ्यस्त्रिपत्रमोटकादिसहितं घृतमधुयुक्तमक्षय्योदकं दद्यात्। तत्र प्रथमं ओँ पुरूरवार्द्रव:संज्ञकानां विश्वेषां देवानामिदमक्षय्यमस्त्विति वदन् दैवे दद्यात्। ततः अमुकगोत्रस्य वसुरूपस्य पितुरमुकदेवशर्म्मणः इदमक्षय्यमस्त्वित्यादि क्रमेण पितृपितामहादीनां प्रत्येकमभिलप्य दद्यादिति हेमाद्रिः। गौड़ास्तु पैत्र एवाक्षय्यं दद्यान्न दैवे इति वदन्ति। सर्व्वत्र ओँ अस्त्वक्षय्यमिति प्रत्युक्तिः। अथ यज्ञोपवीती कृताञ्जलिः प्राङ्मुखः पितृसमीपे उपविश्य ओँ येषामुद्दिष्टं तेषामक्षय्यमस्त्विति प्रार्थयेत। ओँ अस्त्वक्षय्यमिति प्रत्युक्तिः। ओँ अघोराः पितरः सन्तु इत्युक्तौ

ओं सन्त्वघोराः पितरः इति प्रत्युक्तिः। ओं गोत्रं नो वर्द्धताम् इत्युक्तौ, ओं वर्द्धतां वो गोत्रम् इति प्रत्युक्तिः। ओं दातारो नोऽभिवर्द्धन्ताम् इत्युक्तौ ओं अभिवर्द्धन्तां वो दातारः। एवं ओं वेदाश्च नोऽभिवर्द्धन्ताम् ओं अभिवर्द्धन्तां वो वेदाः। ओं सन्ततिर्नोऽभिवर्द्धताम्। ओं अभिवर्द्धतां वः सन्ततिः। ओं श्रद्धा च नो मा विगमत्। ओं मा विगमद्वः श्रद्धा। ओं बहुदेयञ्च नोऽस्तु। ओं अस्तु वो बहु देयम्। ओं अन्नञ्च नो बहु भवेत्। ओं भवत्वन्नं वो बहु। ओं अतिथींश्च लभेमहि। ओं लभध्वं चातिथीन्। ओं याचितारश्च नः सन्तु। ओं सन्तु वो याचितारः। ओं मा च याचिष्म कञ्चन। ओं मा याचध्वं कञ्चन। ओं एताः सत्याः आशिषः सन्तु। ओं सन्तु सत्या इत्येवं प्रार्थनाप्रतिवचनेभ्योऽनन्तरं द्विजैर्दत्तमक्षतपुष्पं गृहीत्वा शिरसि धारयेत्। अथ कुशभपात्रोपरिस्थितपवित्राख्यर्घपात्रस्थपवित्रैः सह समानीय पिण्डपश्चिमदिशि दक्षिणाग्राणि निधाय ओं स्वधां वाचयिष्ये इति द्विजानापृच्छ्य ओं वाच्यतामिति तैरनुज्ञातः ओं वसुरूपेभ्योऽमुकनामगोत्रेभ्यः पितृभ्यः स्वधोच्यतामित्यादिक्रमेणोक्ते ओं उच्यतां स्वधेति द्विजप्रत्युक्तौ ऊर्ज्जमित्यस्य प्रजापतिर्ऋषिर्विराट् छन्दः आपो देवताः पिण्डे जलसेचने विनियोग इति स्मृत्वा

ओं ऊर्ज्जं वहन्तीरमृतं घृतं पयः कीलालं परि-

स्रुतम्। स्वधा स्थ तर्पयत मे पितॄन्(१) (य० २ अ० ३४ क०) इत्युच्चार्य्य सतिलमधुयुतपात्रस्थच्युतजलेन सकुशेन पितृतीर्थेन पिण्डोपरि निषिञ्चेत्। ओं स्वधा संपद्यतामित्युक्तौ ओं संपद्यतां स्वधेति प्रत्युक्तौ न्युब्जपात्रमुत्तानं कुर्य्यात्। ततः अद्येत्यादि अमुकगोत्राणाम् अमुकदेवशर्म्मणां वसुरुद्रादित्यरूपाणां पितृपितामहप्रपितामहानां कृतैतत्पार्व्वणश्राद्धकर्म्मणः प्रतिष्ठार्थमिदं रजतं दक्षिणां ब्राह्मणायाहं ददानीत्युत्सृजेत्। एवं मातामहादीनामपि। ततः अद्येत्यादि अमुकगोत्रनाम्नां वसुरुद्रादित्यरूपाणां पितृपितामहप्रपितामहानां मातामहप्रमातामहवृद्धप्रमातामहानाञ्च कृते श्राद्धे पुरूरवार्द्रवःसंज्ञकानां विश्वेषां देवानां कृतैतत्पार्व्वणश्राद्धकर्म्मणः प्रतिष्ठार्थमिदं हिरण्यं दक्षिणां ब्राह्मणायाहं ददानीत्यभिलपेत्। ततो दैवे विप्रे जलं दत्त्वा ओं विश्वे देवाः प्रीयन्तामिति भवन्तोऽधिब्रुवन्तु इति द्विजान् प्रार्थयेत। ते च ओं प्रीयन्तां विश्वे देवा इति प्रतिब्रुयुः। ततस्तूष्णीं जलपुष्पाक्षतादीनि पूर्व्ववत् क्रमेण

---

(१) हे आपः! अमृतं रोगनाशकं मृत्युनाशकं वा कीलालम् कीलो बन्धस्तद्दारकम् परिस्रुतम् ऊर्ज्जं स्वाद्वन्नरसं घृतं पयो दुग्धं वहन्तीः वहन्त्यः स्वधा पितृहविःस्वरूपाः स्थ भवथ। तद्रूपाश्च सत्यः मे मम पितॄन् तर्पयत।

पितृद्विजेषु दत्त्वा पितृभ्य इत्यादिना ( २८पृ० ) पित्रादि-
पिण्डान् नमो वः इत्यादिना ( २६पृ० ) च मातामहादि-
पिण्डांश्चाभ्यर्च्यात्र

पिता धर्म्मः पिता स्वर्गः पिता हि परमं तपः।
पितरि प्रीतिमापन्ने प्रीयन्ते सर्व्वदेवताः
इत्यनेन पितॄन्नमेत्। ततः कृताञ्जलिः।
ओं पिता पितामहश्चैव तथैव प्रपितामहः।
तृप्तिमायान्तु पिण्डेन मया दत्तेन भूतले।
मातामहस्तत्पिता च पिता तस्यापि तृप्यतु।
द्विजानां तर्पणाद्धोमात् पिण्डदानाच्च मे सदा इति

पठेत्। ततः सप्त व्याधा इत्यादि (५१पृ०) पठित्वा

ओं गयायां मुण्डपृष्ठे च सरसि ब्रह्मणस्तथा।
गयाशीर्षे वटे चैव पितॄणां दत्तमक्षयम्।
गयायां पितृरूपेण स्वयमेव जनार्दनः।
तं दृष्ट्वा पुण्डरीकाक्षं मुच्यते च ऋणत्रयात्।
शमीपत्रप्रमाणेन पिण्डं दद्याद्गयाशिरे।

उद्धरेत् सप्त गोत्राणि कुलञ्चैकोत्तरं शतम् इति च पठेत्।

ततः ओं इदं साङ्गं कर्म्म विधिवत् गयाश्राद्धरूपमस्तु इति पृच्छेत्। ते च ओं अस्तु गयाश्राद्धरूपम् इति प्रतिवदेयुः। ततः

ओं मन्त्रहीनं क्रियाहीनं श्रद्धाहीनं द्विजोत्तमाः!।
श्राद्धं संपूर्णतां यातु प्रसादाद्भवतां मम!।

इति प्रार्थयेत। सर्वे च ओं सम्पूर्णमस्तु इति प्रतिवदेयुः। ततो हस्तद्वयेनैकैकं पिण्डमुद्धृत्य पात्रे निधाय पाणिभ्यां पात्रमुत्क्षिप्य पिण्डानवघ्रायाचस्य कर्म्मोपयुक्तान् कुशानग्नौ प्रक्षिप्य च स्वयं पुत्रः शिष्यः सजातिर्वा द्विजभोजनभाजनानि चालयेत् नान्यः।

ततः श्राद्धभूमिं जलैरभ्युक्ष्य दैवक्रमेण द्विजेष्वपो दत्त्वा ओं स्वस्ति भवन्तोऽधिब्रुवन्तु। इति प्रार्थयेत। ते च प्रत्येकं ओं स्वस्त्यस्तु इति प्रतिवदेयुः। अथ कुशाग्रेण द्विजं स्पृशन् वाजे वाजे इत्यस्य वसिष्ठऋषिस्त्रिष्टुप् छन्दोऽश्वतुल्याः पितरो देवताः श्राद्धे पितृविसर्ज्जने विनियोग इति स्मृत्वा

ओं वाजेवाजेऽवत वाजिनो नो
धनेषु विप्रा अमृता ऋतज्ञाः।

अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः (१) (य० ९अ० १८क०) इत्युक्त्वा

---

(१) हे विप्रा! मेधाविनः परिदृष्टकारिणो वा अमृता अमरणधर्म्माणः ऋतज्ञाः सत्यज्ञा यज्ञज्ञा वा वाजिनोऽश्वाः शीघ्रगमनागमनकारित्वादश्वतुल्याः पितरः इत्यर्थः। वाजेवाजे प्रतिवाजं सर्व्वस्मिन्नन्ने उपस्थिते सति धनेषु चोपस्थितेषु सत्सु नोऽस्मान् अवत पालयत। किञ्च अस्य मध्वः इदं श्राद्धान्नादि हविर्लक्षणं मधु पिबत पीत्वा च मादयध्वं तृप्ता भवत। ततस्तृप्ताः सन्तो देवयानैर्देवाधिष्ठितैः पथिभिर्मार्गैर्यात यथास्थानं गच्छत। रूपसिद्धिश्छान्दसी।

ओं उत्तिष्ठत पितर इत्येवमादौ पित्रादीन्, ततस्तथैव मातामहादीन्, ततस्तेनैव मन्त्रेण ओं उत्तिष्ठत विश्वे देवा इत्युच्चार्य्य च देवान् विसर्ज्जयेत् । ततोऽभिरम्यतां त्तमध्वमित्यासनं सञ्चालयेत् आ मा वाजे इत्यस्य वसिष्ठऋषिस्त्रिष्टुप् छन्दः प्रजापतिर्देवता श्राद्धे प्रदक्षिणीकरणार्थे विनियोग इति ऋष्यादिकं स्मृत्वा

ओं आ मा वाजस्य प्रसवो जगम्यादेमे द्यावा पृथिवी विश्वरूपे ।

आ मा गन्तां पितरामातरा च मा सोमोऽमृतत्वेन गम्यात् (य० ६अ० १६क०) (१) ।

इत्यनेन प्रदक्षिणीकृत्य नमस्कृत्य च पितृभ्यो वरान् प्रार्थयेत । यथा

ओं दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च ।
श्रद्धा च नो बहु भवेदतिथींश्च लभेमहि ॥
याचितारश्च नः सन्तु मा च याचिष्म कञ्चन ।
अन्नं प्रवर्द्धतां नित्यं दाता शतं जीवतु ।

---

(१) वाजस्यान्नस्य प्रसवः विस्तरः मा माम् आ जगम्यात् आगच्छतु । आ इमे विश्वरूपे नानारूपे द्यावापृथिवी द्यावापृथीव्यौ मां प्रति जगम्याताम् आगच्छताम् । वचनव्यत्ययः । पितरामातरा पितामाता च मा मां प्रति आ गन्ताम् आ गच्छताम् सोमश्चन्द्रश्चामृतत्वेन सहोपेतः चतुर्थ्यर्थे तृतीया, अमृतत्वाय वा मम देवजन्मने मा माम् आ गम्यात् आगच्छेत् । रूपसिद्धिश्छान्दसी ।

येभ्यः सङ्कल्पिता द्विजास्तेषामनया तृप्तिरस्तु।

पितृवरप्रसादोऽस्तु। इत्युक्तौ विप्राः ओं एवं सर्व्वं-
मस्तु इति वदेयुः। ततः

ओं आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च।

प्रयच्छन्तु तथा राज्यं प्रीता नृणां पितामहाः।

इति पठेत्। ततो द्विजान् परिचर्य्य

ओं अद्य मे सफलं जन्म भवत्पादाभिवन्दनात्।

अद्य मे वंशजाः सर्व्वे याता वोऽनुग्रहाद्दिवम्।

पत्रशाकादिदानेन क्लेशिता यूयमीदृशम्।

तं क्लेशमिह सञ्जातं विस्मृत्य क्षन्तुमर्हथ इति
क्षमयित्वा विप्रान् विसर्ज्जयेत्

ततः पात्रान्नं विप्रसात् कृत्वा पिण्डं जलादौ क्षिपेत्।
ततो देवताभ्य इति त्रिर्जपेत्। ततः अद्येत्यादि कृतैत-
त्पार्व्वणश्राद्धमच्छिद्रमस्त्विति वाक्ये कश्चिद्विप्रः ओं अच्छिद्र-
मस्तु इति प्रतिवदेत्। ततः विप्रग्रन्थिमुन्मुच्य स्वस्वशाखीयं
शान्त्यादिकं पठेत्। तच्च विस्तरभयान्नोक्तम् मत्कृततुला-
दानादिपद्धतौ तु तद्द्रष्टव्यम्। ततः कर्म्मवैगुण्यसमाधा-
नार्थं संकल्प्य यस्य स्मृत्येत्यादिना (३०९०) विष्णुं स्मरेत्।
ततः कर्म्मफलमीश्वरेऽर्पयेत्। ततः श्राद्धशेषं भुञ्जीत।
प्रकृतस्याभ्युदयिकरूपतया कर्त्तव्यत्वे ऋजवो दर्भा वसुसत्यौ
विश्वे देवाः पित्रादिशब्दात् पूर्व्वं नान्दीमुखेतिशब्दस्य,
स्वधाशब्दमपहाय नमःशब्दस्य, देवताभ्य इति मन्त्रे तु

स्वधायै इत्यपहाय पुष्टैत्र इति पदस्य, च प्रयोगः। सप्तव्याधा इत्यादिमन्त्राभावः। तृप्तिप्रश्नप्रतिवाक्ये न स्तः। आमान्नश्राद्धकरणे तु तत्प्रक्षालनम्। यजुर्वेदिना वृद्धिश्राद्धवत्कर्त्तव्यतायां मातृपक्षोऽधिकः कार्य्यः। शूद्रैर्यजुर्वेदिविधानानुसारेणैव पार्व्वणमाभ्युदयिकं वा विधेयम् तत्र वेदमन्त्रः कर्म्म कारयितृविप्रैरेव पाठ्यः शूद्रेण तु तत्स्थले नमःशब्द एव पठनीयः पौराणिकमन्त्रा वाक्यानि च प्रणवस्वधाशब्दौ विहाय पाठ्यान्यन्यत् समानम्।

इति पार्व्वणश्राद्धविधानम्।

---

ततो यथाशक्ति वस्त्रालङ्कारगोभूहिरण्यादिभिस्त्र्यवराणां विप्राणां पूजनं विधाय यात्रासंकल्पं कुर्य्यात्। यथा अद्येत्यादिना देशकालौ सङ्कीर्त्त्य समस्तपितॄणां सप्तसु गोत्रेषु चैकोत्तरशतपुरुषाणां दशपूर्व्वदशापरस्ववंश्यानाञ्च पदे पदे स्वर्गारोहणसिद्धये नरकोद्धारपूर्व्वकशाश्वतब्रह्मभावप्राप्तये च गयाश्राद्धादिकरणाय गयायात्रामहं करिष्ये इति। ततः काषायादिवस्त्रपरिधानरूपं कार्पटीवेषं विधाय श्राद्धशेषं घृतमादाय ज्योतिषोक्तयात्रासमये ग्रामान्निर्गत्य तं ग्रामं प्रदक्षिणीकृत्य क्रोशाभ्यन्तरस्थं ग्रामान्तरमासाद्य श्राद्धशेषघृतेन पारयेत्।

उत्तरदिने पूर्व्वाह्णे यात्रामुहूर्त्तलाभे एवं क्रमः। पूर्व्व-रात्रे शेषरात्रे वा मुहूर्त्तसत्त्वे तु तद्दिने उपवासं विधाय ज्योतिःशास्त्रोक्तरीत्या क्वचित् फलवस्त्रादिक प्रस्थापनं कृत्वा प्रातः श्राद्धादिकं विधाय निर्गत्य तत्प्रा-स्थानिकं गृहीत्वा ग्रामं प्रदक्षिणीकृत्य ग्रामान्तरे पारयेदिति विशेषः। ततो द्वितीयदिने तमपि ग्रामं प्रदक्षिणीकृत्य प्रातःस्नानसन्ध्यादि नित्यं कर्म्म समाप्य प्रतिग्रहनिवृत्त्यादिनियमवानामध्याह्नं गच्छेत्।

प्रतिग्रहनिवृत्त्यादि नियमो यथा

यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम्।
विद्या तपश्च कीर्त्तिश्च स तीर्थफलमश्नुते॥
प्रतिग्रहादुपावृत्तः संतुष्टो येन केनचित्।
अहङ्कारविमुक्तश्च स तीर्थफलमश्नुते।
अकल्कको निरारम्भो लघ्वाहारो जितेन्द्रियः।
विमुक्तः सर्व्वसङ्गेषु स तीर्थफलमश्नुते॥
अश्रद्दधानः पापात्मा नास्तिकोऽच्छिन्नसंशयः॥
हेतुनिष्ठश्च पञ्चैते न तीर्थफलभागिन इति

(अकल्ककः) दम्भरहितः। एवं भावाभावनियमं विधाय गच्छेत्। ततो मध्याह्नसमये नद्यादिकमवगाह्य माध्या-ह्निकं सन्ध्यादिकं विधाय पाकानुष्ठानपूर्व्वकं पञ्चयज्ञ भोजनादिकं विधाय सायं सन्ध्यामुपास्य तत्रैव तिष्ठेत्। ततस्तृतीयदिनेऽपि तथैव सर्व्वं कुर्य्यात्। एवं प्रतिदिन-

भातीर्थप्राप्ति गच्छेत्। मार्गे यदि वाराणसी पुनःपुना शोणो वा प्राप्यते तदा तत्र वक्ष्यमाणविधानेन स्नान-तर्पणे विधाय श्राद्धं कुर्य्यात्। तत्र पुनःपुनाश्राद्धे

ओं अस्मत् कुले मृता ये च आगच्छन्तु पुनःपुना-मिति पठेत्।

अथ गयाप्राप्तिदिनकृत्यम्। यदि यानारूढ़ः सोपानत्को वा गच्छेत् तदा गयाप्राप्तिदिने पादचारेण यावत् गन्तुं शक्यते तावतः स्थानात् यानोपानहौ परि-त्यज्य गच्छेत् तीर्थे दृष्टिगोचरतां गते यथाभूमिपरागो गात्रे लगति तथाऽष्टाङ्गम्

"पद्भ्यां कराभ्यां जानुभ्यां शिरसा चोरसा तथा।
मनसा वचसा दृष्ट्या प्रणामोऽष्टाङ्ग उच्यते"।

इत्युक्तलक्षणम् प्रणम्य शिरोऽवगुण्ठनशस्त्रमाल्य कञ्चुकादिकं परित्यज्य तीर्थं गच्छेत्। ततस्तीर्थे संप्राप्ते उद्धृतोदकेन तीर्थदूरे पादौ पाणी च प्रक्षाल्याचा-मेत्। ततः ओं गयातीर्थाय नम इति गन्धपुष्पादिभि-रभ्यर्च्य यथाशक्ति हिरण्यवस्त्राद्यौपढौकनिकं स्थापयेत्। ततः फल्ग्वां स्वतःसिद्धं खातोत्पादितं वा तीर्थजलं प्रण-वेनालोड्याङ्गवस्त्राण्येकीकृत्य सचेलं स्नानं कुर्य्यात्। तथा स्नात्वा च जलाद्बहिरागत्य दक्षिणे पाणौ पवित्रं वामे कुशांश्च धृत्वाचम्य प्राणानायम्य देशकालौ संकीर्त्य समस्तपितृलोकानां विष्णुलोकावाप्तये आत्मनश्च भुक्ति-

मुक्तिप्राप्तये तीर्थप्राप्तिनिमित्तं स्नानमहं करिष्ये इति सङ्कल्पात्र

ओँ नमो देवदेवाय शितिकण्ठाय दण्डिने।
रुद्राय चापहस्ताय चक्रिणे वेधसे नमः।
सरस्वती च सावित्री वेदमाता गरीयसी।
सन्निधानीभवत्वत्र तीर्थपापप्रणाशिनी इति

मन्त्राभ्याम्

ओँ सागरस्वननिर्घोष! दण्डहस्तासुरान्तक!।
जगत्स्रष्टः! जगद्दर्दिन्नमामि त्वां सुरेश्वर!।
तीक्ष्णदंष्ट्र! महाकाय! कल्पान्तदहनोपम!।
भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसीति

मन्त्राभ्यां च लिङ्गोक्तदेवतानां प्रणामप्रार्थने कुर्य्यात् ततः

ओँ फल्गुतीर्थे विष्णुजले करोमि स्नानमादृतः।
पितॄणां विष्णुलोकाय भुक्तिमुक्तिप्रसिद्धय इति

मन्त्रं पठित्वा वैधस्नानं कुर्य्यात्। यथा ऋतञ्च सत्यञ्चेत्याद्यन्ताघमर्षणसूक्तेन(१)त्रिरावृत्तेन जलाभिमन्त्रणं तोयावर्त्तनरूपं तीर्थपरिकल्पनं तेनैव त्रिरावृत्तेनाचमनं तेनैव त्रिरावृत्तेन मार्ज्जनञ्च कृत्वा जलमध्ये तत्सूक्तं त्रिर्जपित्वा त्रिरावृत्तेन तेन स्नानं कुर्य्यात्।

---

(१) द्रुपदादिव मुमुचान इत्यादिकम् ऋतञ्च सत्यञ्चेत्यादिकञ्च सूक्तं सन्ध्यापद्धत्युक्तार्षादिस्मरणपूर्व्वकं पाठ्यम्।

शूद्रादिस्तु

अश्वक्रान्ते! रथक्रान्ते! विष्णुक्रान्ते! वसुन्धरे!।

मृत्तिके! हर मे पापं यन्मया दुष्कृतं कृतम्।

आरुह्य मम गात्राणि सर्व्वपापं प्रमोचय।

इति मन्त्रेण सर्व्वगात्रेषु मृत्तिकां दद्यात्।

ततो नाभिमात्रजले ओं नमो नारायणायेति मन्त्रेण चतुर्हस्तं चतुरस्रं तीर्थं कल्पयित्वा

ओं विष्णुपादप्रसूतासि पापं मे हर जाह्नवीति

मन्त्रं पठित्वा जलमध्ये ओं नमो नारायणायेति मन्त्रं सप्त वारान् जपित्वा तेन मन्त्रेण शिरसि सप्ताञ्जलीन्दद्यात्। ततः पूर्व्वोक्तविधिना त्रिः सकृद्वा जले मज्जेत्। अत्र च पद्मपुराणीयस्नाने सर्व्वाधिकारः। एवं स्नात्वा धौतवस्त्रे परिधाय गोपीचन्दनगङ्गामृत्तिकादिभिरूर्द्ध्वपुण्ड्रं भस्मना त्रिपुण्ड्रं च विधाय माध्याह्निकसन्ध्यां कृत्वा देशकालौ सङ्कीर्त्त्य समस्तपितृणामसद्गतीनां सद्गतिप्राप्तये सद्गतीनाञ्च शाश्वतब्रह्मलोकादिप्राप्तये तीर्थप्राप्तिनिमित्तं नित्यं च तर्पणं तन्त्रेणाहं करिष्ये इति सङ्कल्प्य ब्रह्मादीन् तर्पयेत्।

अथ सामान्यतर्पणविधिरभिधीयते। तत्र प्राङ्मुखः कुशहस्त आचम्य उपवीती यवेन सह पूर्व्वाग्रान् कुशान् दक्षिणहस्तेन गृहीत्वा विश्वे देवास इत्यादि (३४ पृ०) पूर्व्ववत् देवानावाह्य विश्वे देवा इत्यादिना (३५ पृ०)

प्राच्यं च ओं देवा! आगच्छत इत्यनेन देवानावाह्य ब्रह्मादीन् तर्पयेत्।

यथा ओं ब्रह्मा तृप्यतु ओं विष्णुस्तृप्यतु ओं रुद्रस्तृप्यतु ओं प्रजापतिस्तृप्यतु इति प्रत्येकमञ्जलिं दत्त्वा जलं सिञ्चेदनेन मन्त्रेण

ओं देवा यक्षास्तथा नागा गन्धर्व्वाप्सरसोऽसुराः।
क्रूराः सर्पाः सुपर्णाश्च तरवो जम्भगाः खगाः।
विद्याधरा जलाधारास्तथैवाकाशगामिनः।
नीराहाराश्च ये जीवाः पापे धर्म्मे रताश्च ये।
तेषामाप्यायनायैतद्दीयते सलिलं मया।

इत्येवं देवतर्पणं कुर्य्यात्। सामवेदी तु तृप्यतामित्येव क्रियापदे आत्मनेपदं प्रयुञ्जीत। ततो निवीती उदङ्मुख उत्तराग्रकुशेन प्रजापतितीर्थेन यवेन समसञ्जलिना जलं सिञ्चेदनेन मन्त्रेण।

ओं सनकश्च सनन्दश्च तृतीयश्च सनातनः।
कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथा।
सर्व्वे ते तृप्तिमायान्तु मद्दत्तेनाम्बुना सदा।

ततः प्राङ्मुख उपवीती पूर्व्वाग्रसयवकुशतयेण देवतीर्थेन मरीच्यादींस्तर्पयेत्। यथा

ओं मरीचिस्तृप्यतु ओं अत्रिस्तृप्यतु ओं अङ्गिरास्तृप्यतु ओं पुलस्त्यस्तृप्यतु ओं पुलहस्तृप्यतु एवं क्रतुः प्रचेताः वसिष्ठः नारदः। ततः प्राचीनावीती

दक्षिणामुखः पितृतीर्थगतभग्नकुशेन तिलोदकचन्दनेनाग्निष्वात्तादीन् तर्पयेत्। यथा

ओं अग्निष्वात्ताः पितरस्तृप्यन्तु

एवं सोम्याः हविष्मन्तः उष्मपाः सुकालिनः वर्हिषदः आज्यपाः। एषु सर्व्वत्र क्रियापदमुक्ता अञ्जलित्रयं दद्यात्। ततः चतुर्द्दशभ्यो यमेभ्यः प्रतेप्रकं तिलोदकाञ्जलित्रयं दद्यात्। अथवा

ओं यमाय धर्म्मराजाय मृत्यवे चान्तकाय च।
वैवस्वताय कालाय सर्व्वभूतक्षयाय च।
औडुम्बराय दध्नाय नीलाय परमेष्ठिने।
वृकोदराय चित्राय चित्रगुप्ताय वै नमः।

इति मन्त्रेणाञ्जलित्रयं दद्यात्। ततस्तिलान् गृहीत्वा पितृनावाहयिष्ये। इत्युक्त्वा उशन्त इत्यादिना (३९पृ०) प्राग्वत् पितृनावाह्य सामवेदी तु एत पितरः (५३पृ०) इत्यादिना चावाह्य बद्धाञ्जलिः आयान्तु नः (४० पृ०) इत्यादिना प्रार्थयेत। इत्थं सामान्यावाहन प्रार्थने कृत्वा तर्पणे

ओं आगच्छन्तु मे पितर इमं गृह्णन्त्वपोऽञ्जलिमिति विशेषावाहनप्रार्थने कुर्य्यात्। तीर्थे तु आवाहनं नास्तीति विशेषः। ततो वामहस्तस्थतिलान् दक्षिणाङ्गुष्ठतर्ज्जनीभ्यामादाय तर्पणीयजले दत्त्वा वस्वादिरूपेण (५७पृ०) पितृन् ध्यायन्

ऊर्ज्जमित्यादि (५८ पृ०) मन्त्रं पठित्वा अमुक-गोत्र! पितरमुकदेवशर्म्मन्नेतत् सतिलोदकं तुभ्यं स्वधेति वाक्यमभिधाय अञ्जलित्रयं दद्यात्। सामवेदीतु अमुकगोत्रः पिता अमुकदेवशर्म्मा एतत् सतिलोदकं तस्मै स्वधेति वाक्यमभिदध्यात्। प्रतीच्यास्तु अमुकगोत्राः अस्मत् पितरः अमुकदेवशर्म्माण एतत् सतिलोदकं तृप्यध्वं स्वधा नम इति वाक्यान्ते पितॄन् प्रीणयामीति वदन्ति। एवं पितामहप्रपितामहमातामहप्रमातामहवृद्धप्रमाता-महानां प्रत्येकम् ऊर्ज्जं वहन्तीरिति मन्त्रपाठपूर्व्वकं वाक्यमुक्त्वा प्रत्येकं जलाञ्जलित्रयं दद्यात्। ततो मातुस्तर्पणं कुर्य्यात्। यथा ऊर्ज्जमिति मन्त्रान्ते अमु-कगोत्रे! मातरमुकीदेवि! एतत् सतिलोदकं तुभ्यं स्वधा इति वाक्यत्रयेणाञ्जलित्रयं दद्यात्। सामवेदी तु अमु-कगोत्रा माता अमुकी देवी एतत् सतिलोदकं तस्यै स्वधेति वाक्यं वदेत्। ततो मातृसपत्नीपितामही-तत्सपत्नीप्रपितामहीतत्सपत्नीमातामहीतत्सपत्नीप्रमाता-महीतत्सपत्नीवृद्धप्रमातामहीतत्सपत्नीनां गोत्रसम्बन्ध-नामान्युल्लिख्य सर्व्वासामेकैकाञ्जलिना तर्पणं कुर्य्यात्। पितामहीप्रपितामहीभ्यान्त्वञ्जलित्रयमिति गौड़ाः।

ततो निजपत्नीगुरुगुरुपत्नीपितृव्यतत्पत्नीमातुल-मातुलानीभ्रातृभ्रातृपत्नी पितृमातृष्वसृतत्पतिदु-हितृजामातृ-श्वशुरश्वश्रूपुत्त्रतत्पत्नीपौत्रदौहित्र-बान्धव-

मित्रादीनां गोत्रसम्बन्धनामान्युल्लिख्य स्त्रीणां पुरुषाणाञ्चैकाञ्जलिना तर्पणं कुर्य्यात्। ततः सर्व्वतर्पणावशेषे भग्नकुशेन पितृतीर्थेन तिलोदकाञ्जलित्रयम्

ओं येऽबान्धवा बान्धवा वा येऽन्यजन्मनि बान्धवाः।

ते तृप्तिमखिला यान्तु ये चास्मत्तोयकाङ्क्षिणः।

इति मन्त्रेण बान्धवादिभ्यो दद्यात्। पद्मपुराणोक्ततर्पणे तु विष्णुपुराणोक्तविशेषदेवतर्पणं न कर्त्तव्यं पद्मपुराणे तदश्रवणात् किन्तु सामान्यतो देवादिजन्तुपर्य्यन्ततर्पणमेव देवतर्पणसमये कार्य्यं यथा

ओं देवासुरास्तथा नागा यक्षा गन्धर्व्वराक्षसाः।

पिशाचा गुह्यकाः सिद्धाः कूष्माण्डास्तरवः खगाः।

जलेचरा भूमिचरा वाय्वाहाराश्च जन्तवः।

तृप्तिमेतेन यान्त्वाशु मद्दत्तेनाम्बुना सदा इति।

एवं सर्व्वतर्पणशेषे च

ओं नरकेषु समस्तेषु यातनासु च ये स्थिताः।

तेषामाप्यायनायैतद्दीयते सलिलं मयेति।

ओं येऽबान्धवा बान्धवा इत्यादि प्रागुक्तम्।

ओं यत्र क्वचन संस्थानां क्षुत्तृष्णोपहतात्मनाम्।

इदमक्षय्यमेवास्तु मया दत्तं तिलोदकमिति च

त्रिभिर्मन्त्रैरेकोऽञ्जलिर्देय इति। एतावत्तर्पणाशक्तौ तु।

ओं आब्रह्म स्तम्बपर्य्यन्तं जगत्स्थावरजङ्गमम्।

मया दत्तेन तोयेन तृप्तिं यातु परां गतिमिति

मन्त्रेण त्रीन् जलाञ्जलीन् दद्यात्। अथ वा

ओँ आब्रह्म स्तम्बपर्य्यन्तं देवर्षिपितृमानवाः।

तृप्यन्तु पितरः सर्व्वे मातृमातामहादयः।

अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम्।

आ ब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकमिति

श्लोकद्वयात्मकेन मन्त्रेण सतिलान् त्रीन् जलाञ्जलीन् दद्यात्। अत्र सन्ध्यार्घ्यदानवत् प्रत्यञ्जलि मन्त्रावृत्ति-रिति बहवः। सकृदेव मन्त्रं पठन् त्रीनञ्जलीन्दद्यादिति केचित्। इत्येवं तर्पणं समाप्य जलादुत्तीर्य्य

ओँ ये चास्माकं कुले जाता अपुत्रा गोत्रिणो मृताः।

ते तृप्यन्तु मया दत्तं वस्त्रनिष्पीड़नोदकम्।

इति पठित्वा स्नानवस्त्रं निष्पीड्य तत्तदुद्देशेन जलं भूमौ त्यजेत्। इति तर्पणविधिः।

इत्थं तर्पणं विधाय विष्णुं षोड़शभिः पञ्चभिर्वोप-चारैः संपूज्य गयाख्यमहातीर्थप्राप्तिनिमित्तकं कुलाचा-रानुसारेण पितृपक्ष-मातामहपक्ष-मातृपक्ष-मातामही पक्ष-पार्व्वणं पर्व्वोक्त-त्रिपक्ष-पार्व्वण-प्रथमोक्त-द्विपक्ष, पार्व्वणान्यतमपार्व्वणपितृव्याद्येकोद्दिष्टसमुदायात्मकं श्राद्ध-मन्नेनामेन हेम्ना वा ब्राह्मणेषु कुशवटुषु वा यथासम्भवं पूर्व्वोक्त-स्वश्राद्ध-विधानानुसारेणार्घावाहनादिनिषिद्ध वर्ज्जं कुर्य्यात्।

अथ तीर्थश्राद्धे वर्ज्जनीयानि। अर्घदानम्, आवा-

ह्नं, विसर्ज्जनं, द्विजाङ्गुष्ठस्यान्ने निवेशनं, तृप्तिप्रश्नं, विकिरदानं, दिग्बन्धं, दृष्टिदोषकृतापवित्रताशोधनार्थं शुद्धवत्यादिमन्त्रजपम्, अग्नौकरणं, पात्रालम्भनपूर्ब्बकं पृथिवी ते इत्यादि (४६पृ०) मन्त्रजपं, भुञ्जानेषु विप्रेषु देवताभ्य इत्यादिमन्त्रजपं च वर्ज्जयेत्। गयाश्राद्धे पिण्डदाने एतत्ते पिण्डं स्वधा नम इति अन्यत्रान्नं स्वधा नम इति ब्रूयादिति प्रतीच्याः। सामवेदी तु एष ते पिण्डः ये चात्र त्वेति पठेत्। यजुर्वेदी तु एतत्ते पिण्डं स्वधेति विशेषः। अत्र तीर्थश्राद्धे पुरूरवार्द्रवःसंज्ञका विश्वे देवा इति त्रिस्थलीसेतुः।

अत्र पिण्डदानद्रव्याणि तु आग्नेये

पायसेनाज्ययुक्तेन सक्तुना चरुणा तथा।

पिण्डदानं तण्डुलैश्च गोधूमैस्तिलमिश्रितैरिति,

देवीपुराणे च

सक्तुभिः पिण्डदानञ्च संयावैः पायसेन च।

कर्त्तव्यमृषिभिः प्रोक्तं पिण्याकेन गुड़ेन वा।

इत्युक्तानि वेदितव्यानि।

अत्र श्राद्धे देशकालौ सङ्कीर्त्त्य सप्तसु गोत्रेषु (ग० मा० ८०पृ० १५प०) एकोत्तरशत (ग० मा०८०पृ०१६प०) कुलोत्पन्नानामसद्गतीनां स्वर्गतये सद्गतीनाञ्च विष्णुलोक प्राप्तये गयाख्यमहातीर्थप्राप्तिनिमित्तकममुकामुकनाम-गोत्राणां पित्रादीनां पार्व्वणं, पितृव्यादीनामेकोद्दिष्ट-

विधिकञ्च श्राद्धं कुशविप्रेष्वहं करिष्ये इत्येवं सङ्कल्पं कुर्य्यात्। तत्रादौ पित्रादिश्राद्धं ततो मात्रादिश्राद्धं ततो मातामहीनां ततो मातामह्यादीनामित्येव क्रमे विशेषः। अत्रायमप्यन्यो विशेषः। अपहता (४४पृ०) इत्यादिना लेखां कृत्वाऽवनेजनजलं दत्त्वा कुशानास्तीर्य्य पित्रादीनां क्रमेण पिण्डान् दत्त्वा कुलादिसम्बन्धिनः

अस्मत् कुले मृता ये च गतिर्येषां न विद्यते।
आवाहयिष्ये तान् सर्व्वान् दर्भपृष्ठे तिलोदकैः।
मातामहकुले ये च गतिर्येषां न विद्यते।
आवाहयिष्ये तान् सर्व्वान् दर्भपृष्ठे तिलोदकैः॥
बन्धुवर्गकुले ये च गतिर्येषां न विद्यते।
आवाहयिष्ये तान् सर्व्वान् दर्भपृष्ठे तिलोदकैः॥

इति त्रिभिर्म्मन्त्रैरावाह्य प्रागुक्ताभ्याम्

आ ब्रह्मस्तम्बपर्य्यन्तं देवर्षिपितृमानवाः।
तृप्यन्तु पितरः सर्व्वे मातृमातामहादयः॥
अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम्।
आ ब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकम्॥

इति द्वाभ्यां तेभ्यः कुशेषु तिलोदकं दत्त्वा

ओं अस्मत्कुले मृता ये च गतिर्येषां न विद्यते।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम्॥ १॥
मातामहकुले ये च गतिर्येषां न विद्यते।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम्॥ २॥

बन्धुवर्गकुले ये च गतिर्येषां न विद्यते।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ ३ ॥
अजातदन्ता ये केचिद्ये च गर्भे प्रपीड़िताः।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ ४ ॥
अग्निदग्धाश्च ये केचिन्नाग्निदग्धास्तथा परे।
विद्युच्चौरहता ये च तेभ्यः पिण्डं ददाम्यहम् ॥ ५ ॥
दावदाहे मृता ये च सिंहव्याघ्रहताश्च ये।
दंष्ट्रिभिः शृङ्गिभिर्वापि तेभ्यः पिण्डं ददाम्यहम् ॥६॥
उद्बन्धनमृता ये च विषशस्त्रहताश्च ये।
आत्मापघातिनो ये च तेभ्यः पिण्डं ददाम्यहम् ॥७॥
अरण्ये वर्त्मनि वने क्षुधया तृष्णया हताः।
भूतप्रेतपिशाचाद्यैस्तेभ्यः पिण्डं ददाम्यहम् ॥ ८ ॥
रौरवे चान्धतामिस्रे कालसूत्रे च ये गताः।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ ९ ॥
असिपत्रवने घोरे कुम्भीपाके च ये गताः।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ १० ॥
पशुयोनिगता ये च पक्षिकीटसरीसृपाः।
अथ वा वृक्षयोनिस्थास्तेभ्यः पिण्डं ददाम्यहम् ॥११॥
अनेकयातनासंस्थाः प्रेतलोके च ये गताः।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् (१) ॥१२॥

---

(१) अनेकयातनासंस्था ये नीता यमशासने।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ इति वा पाठान्तरम्

नरकेषु समस्तेषु यातनासु च ये स्थिताः ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ १३ ॥
जात्यन्तरसहस्रेषु भ्रमन्तः स्वेन कर्म्मणा ।
मानुष्यं दुर्लभं येषां तेषां पिण्डं ददाम्यहम् ॥ १४ ॥
दिव्यन्तरीक्षभूमिष्ठाः पितरो बान्धवादयः ।
मृता असंस्कृता ये च तेभ्यः पिण्डं ददाम्यहम् ॥१५॥
ये केचित् प्रेतरूपेण वर्त्तन्ते पितरो मम ।
ते सर्व्वे तृप्तिमायान्तु पिण्डेनानेन सर्व्वदा ॥ १६ ॥
येऽबान्धवा बान्धवा वा येऽन्यजन्मनि बान्धवाः ।
तेषां पिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठताम् ॥१७॥
पितृवंशे मृता ये च मातृवंशे तथैव च ।
गुरुश्वशुरबन्धूनां ये चान्येऽबान्धवा मृताः ।
ये मे कुले लुप्तपिण्डाः पुत्त्रदारविवर्ज्जिताः ।
क्रियालोपगताश्चैव जात्यन्धाः पङ्गवस्तथा ।
विरूपा आमगर्भाश्च ज्ञाताज्ञाताः कुले मम ।
तेषां पिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठताम् ॥१८॥

आब्रह्मणो ये पितृवंशजाता
मातुस्तथा वंशभवा मदीयाः ।
वंशद्वये ये मम दासभूता
भृत्यास्तथैवाश्रितसेवकाश्च ।
मित्राणि सर्व्वे पशवश्च वृक्षा
दृष्टा ह्यदृष्टाश्च कृतोपकाराः ।

जन्मान्तरे ये मम सङ्गताश्च
तेभ्यः स्वधा पिण्डमहं ददामि ॥ १९ ॥

इति ऊनविंशतिमन्त्रैरूनविंशतिपिण्डान् प्रादक्षिण्येन पुरुषेभ्यः, तैरेव मन्त्रैः स्त्रीलिङ्गतया समूहितैश्च स्त्रीभ्यो दद्यादिति एवं सर्व्वत्र।

तदशक्तौ तु रेखाकरणादिपिण्डप्रवाहणान्तं पिण्डदानमात्रमेव सर्व्वत्र कार्य्यम्। तद्यथा विष्णुपूजनं, जलपात्रपूरणं, जलाभिमन्त्रणं, प्राणायामः, पुण्डरीकाक्षस्मरणं, द्रव्यप्रोक्षणं, तिलावकिरणम्, (अपसव्यम्) ओं गयायै नमः ओं गदाधराय नम इति तयोर्न्नमस्कारः। अञ्जलिं बद्ध्वा देवताभ्य इति त्रिर्ज्जपः। देशकालयोः संकीर्त्तनान्ते समस्तपितॄणामसद्गतीनां सद्गतिप्राप्तये, सद्गतीनाञ्च शाश्वतविष्णुलोकावाप्तये गयाख्यतीर्थप्राप्तिनिमित्तकं पिण्डदानमात्रमहं करिष्य इति संकल्पः, नीविबन्धनम्, अपहता इति लेखाकरणम्, अवनेजनं, कुशास्तरणम्, पित्रादीनां सर्व्वेषां पिण्डदानम्, पूर्व्वोक्तोनविंशतिमन्त्रैरूनविंशतिपिण्डदानम्, "अत्र पितरः (५५ पृ० १३ प०) इति जपः। उद्गावर्त्तनम्, अमीमदन्तेति (५६ पृ० १ प०) जपः। प्रत्यवनेजनं नीविविस्रंसनम्, नमो वः (१२४ पृ० ६प८) इति षड़ञ्जलिकरणम्, प्रतिपिण्डं सूत्रदानम् (१३०पृ० १६ प०) उक्तेन ऊर्ज्जमित्यनेनापोनिषेकः, गन्धादिभिः पिण्डपूज-

नम्, स्वधावाचनं, दानसाङ्गतार्थं दक्षिणासंकल्पः, पिण्डोद्धरणम्, (सव्यम्), पिण्डावघ्राणम्, तीर्थप्राप्ति-निमित्तं पिण्डदानं परिपूर्णमस्त्विति प्रार्थनम्, पिण्डानां तीर्थजल एव प्रक्षेपः, यस्य स्मृतेरति ( ७४ पृ० ७ प० ) विष्णुस्मरणञ्च। एतानि च श्राद्धपद्धतुरक्तदिशा कार्य्याणि। एवं प्रत्येकं पिण्डदानाशक्तौ एकं पिण्डं दद्यात्। तद्यथा। अवनेजनान्तं पूर्व्ववत् कृत्वा।

ओं पिता पितामहश्चैव तथैव प्रपितामहः।
माता पितामही चैव तथैव प्रपितामही।
मातामहस्तत्पिता च प्रमातामहकादयः।
तेषां पिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठताम्॥

एकं पिण्डं दत्त्वा प्रकृतपिण्डदानशेषं समापयेत्।

इति प्रथमदिन कृत्यम्

अथ द्वितीयदिनकृत्यम्। फल्गुतीर्थे प्रातःस्नानादि कृत्वा गयावायव्यदिशि स्थितं प्रेतपर्व्वतं गत्वा तन्मूलसं-लग्ने ईशानकोणस्थिते ब्रह्मकुण्डे पितृणां सम्भावित प्रेतत्वनाशपूर्व्वकशाश्वतब्रह्मलोकप्राप्तये स्नानतर्पणे विधाय पूर्व्वोक्तं तीर्थश्राद्धं पिण्डदानमात्रं वा कार्य्यम्। तत्रायं विशेषः श्राद्धार्थं जलमादाय प्रेतपर्व्वतमारुह्य सुवर्ण-रेखाङ्कितशिलासन्निधौ गत्वा पादशौचादिकं विधाय पितॄन् ध्यायन्

कव्यवालोऽनलः सोमो यमश्चैवार्य्यमा तथा।

अग्निष्वात्ता बर्हिषदः सोमपाः पितृदेवताः।
आगच्छन्तु महाभागा युष्माभीरक्षितास्त्वथ।
मदीयाः पितरो ये च कुले जाताः सनाभयः।
तेषां पिण्डप्रदानाय आगतोऽस्मि गयामिमाम्।
ते सर्व्वे तृप्तिमायान्तु श्राद्धेनानेन शाश्वतीम्॥

इति मन्त्रेण पितॄनावाहयेत्।

ततो गायत्र्या गोमूत्रम्,

"गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्।
ईश्वरीं सर्व्वभूतानां तामिहोपह्वये श्रियम्" (१) इति

गोमयम्,

"आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम्।
भवा वाजस्य संगथे"(२) इति दुग्धम्,

"दधिक्राव्णोऽकारिषं जिष्णोरश्वस्य वाजिनः।

---

(१) आनन्दकर्द्दमचिक्लीता ऋषयोऽनुष्टुप् छन्दः श्रीर्देवता गोमयशोधने विनियोगः। गन्धद्वारां सर्व्वसौरभाश्रयां दुराधर्षां दुरभिभवां नित्यपुष्टां सततहृष्टां करीषिणीम् गोमयाधिष्ठातृदेवीं सर्व्वभूतानामीश्वरीं तां प्रसिद्धां श्रियमिहास्मिन् कर्म्मणि उपह्वये आह्वयामि। (ऋ० लक्ष्मी सू० ९म० )

( २ ) गौतम ऋषिर्गायत्री छन्दः सोमो देवता दुग्धशोधने विनियोगः। हे सोम! त्वमाप्यायस्व वर्द्धस्व ते तव वृष्ण्यं वीर्य्यं विश्वतः सर्व्वतः समेतु सङ्गच्छतां तादृशस्त्वं वाजस्यान्नस्य सङ्गथे सङ्गमने आभव अन्नप्रदो भवेत्यर्थः। रूपसिद्धिश्छान्दसी ( ऋ० १म० ९१सू० १६म० )।

सुरभि नो मुखा करत् प्र ण आयूंषि तारिषत्"(१) इति दधि,

"तेजोऽसि शुक्रमस्यमृतमसि धाम नामासि प्रियं देवानामनाधृष्टं देवयजनम्" (२) इति घृतञ्च संशोध्य आद्यपर्य्याप्तं स्थानं तैः शोधयेत्।

ततः पूर्व्ववत् अन्नदानान्तं समाप्य पिण्डदानसमयेऽपि तथैव कव्यवालो नल इत्यादिना(८०पृ०)आवाहनम्। भिताादि पिण्डदानान्ते त्वयं विशेषः।

---

(१) वामदेवात्मजदधिक्रावा ऋषिरनुष्टुप् छन्दोऽश्वो देवता दधिशोधने विनियोगः। दधाति धारयतीति दधिः सन् क्रामतीति दधिक्रावा तस्य जिष्णोर्ज्जयशीलस्य वजति गच्छतीति वाजी तस्याश्वस्य संस्कारायेति शेषः अकारिषं कृतवन्तः वयमध्वर्य्वादयः अश्लीलवचनमिति शेषः (वचनव्यत्ययः)। तादृशाश्लीलभाषणेन दुर्गन्धीनि नोऽस्माकं मुखा मुखानि सुरभि सुरभीणि करत् करोतु यज्ञ इति शेषः। नोऽस्माकमायूंषि बाल्ययौवनवार्द्धकानि प्रतारिषत् प्रतारयतु वर्द्धयतु। रूपसिद्धिश्छान्दसी (य० २३०अ० ३२क०)

(२) प्रजापत्यश्विसरस्वत्य ऋषय आज्यं देवता घृतशोधने विनियोगः। हे आज्य! त्वं देहकान्तिहेतुत्वात् तेजोऽसि स्निग्धरूपत्वात् शुक्रं दीप्तिमदसि बहुदिनावस्थानेऽप्योदनवत् पर्य्युषितदोषाभावात् अमृतं विनाशरहितमसि धीयते स्थाप्यते देवैः चित्तवृत्तिरत्रेति धाम स्थानमसि सर्व्वाणि भूतान्यात्मानं प्रति नामयतीति नाम, आज्यं दृष्ट्वा सर्व्वेऽप्यन्तं नमन्तीति भावः। देवानां प्रियमिष्टमनभिभूतमसारतादोषपरिहारेण अतिरस्कृतं देवा इज्यन्तेऽनेनेति देवयजनं यज्ञसाधनमसि अत ईदृशं त्वां गृह्णामीति शेषः।

पिता पितामहश्चैव तथैव प्रपितामहः।

इत्यादिना(८०पृ०)मन्त्रेण तिलाज्यदधिमधुजलयुतस्य मुष्टिमात्रस्य सक्तुकृतस्याज्यपिण्डस्यैकस्यावश्यदानम्। ततस्तद्दक्षिणतः प्रादक्षिण्येनानेककुशास्तरणान्ते पूर्ववत् (७६, ७८ पृ०) आवाहनतिलोदकदानपूर्वकोनविंशति पिण्डदानम्। तद्दक्षिणतश्च स्त्रीलिङ्गतया पूर्वोक्तैरेवोहितमन्त्रैरावाहन-तिलोदक-पिण्डदानानि प्रादक्षिण्येन क्रमेण कुर्य्यात्। पुत्रकामश्चेत् तदा

ओं "यो मे प्रजां नाशयति जीवो नश्यति वा स्वयम्।
तस्य काश्यपगोत्रस्य वायुरूपस्य देहिनः।
प्रेतस्योद्धारविधये तस्मै पिण्डं ददाम्यहम्॥१॥
ओं यो मे प्रजां नाशयति जीवो नश्यति वा स्वयम्।
तस्य प्रेतस्य दत्तोऽत्र पिण्डोऽयमुपतिष्ठताम्॥२॥
ओं यो मे प्रजां नाशयति जीवो नश्यति वा स्वयम्।
विष्णुरूपः स लभतां तां या पिण्डार्पणाहुतिः॥३॥
ओं तस्य काश्यपगोत्रस्य वायुरूपस्य देहिनः।
अयं पिण्डो मया दत्तो यः पीड़ां कुरुते ममेतिच"॥४॥
ओं इमं तिलमयं पिण्डं मधुसर्पिः समन्वितम्।
ददामि तस्मै प्रेताय यः पीड़ां कुरुते ममेति"

च मन्त्रैः चतुरः पिण्डान् दद्यात्। प्रतिपिण्डञ्च अत्र पितर इति (५५पृ०) जपः। ततः श्राद्धशेषं पूर्ववत्

समापयेत् । इत्थं ब्राह्मणविसर्ज्जनान्तं कर्म्म कृत्वाचम्य प्राङ्मुखो भूत्वा

ओं साक्षिणः सन्तु मे देवा ब्रह्मेशानादयस्तथा ।
मया गयां समासाद्य पितॄणां निष्कृतिः कृता ॥
आगतोऽस्मि गयां देव ! पितृकार्य्ये गदाधर ! ।
त्वमेव साक्षी भगवन्ननृणोऽहमृणत्रयात् ॥

साक्षितया ब्रह्मादीन् कल्पयित्वा श्रावयेत् । एवं प्रेतपर्व्वते श्राद्धं पिण्डदानमात्रं वा कृत्वा पित्रादिगत-प्रेतत्वविमुक्तिस्वगतप्रेतत्वाभावकामः प्रेतपर्व्वते तिलमि-श्रितसक्तुनिक्षेपं तिलमिश्रजलाञ्जलिदानं च करिष्ये इति संकल्प्य

ओं ये केचित् प्रेतरूपेण वर्त्तन्ते पितरो मम ।
ते सर्व्वे तृप्तिमायान्तु सक्तुभिस्तिलमिश्रितैः ॥

दक्षिणामुखः तिलमिश्रसक्तून् क्षिप्त्वा

ओं आब्रह्म स्तम्बपर्य्यन्तं यत् किञ्चित् सचराचरम् ।
मया दत्तेन तोयेन तृप्तिमायान्तु सर्व्वशः ॥

इति मन्त्रेण तिलसंयुतजलाञ्जलीन् दद्यात् ।

इति प्रेतपर्व्वतकृत्यम् ।

ततः प्रेतपर्व्वतादवरुह्य महानदीपश्चिमतीरस्थां गयो-त्तरस्थां प्रेतशिलां गत्वा पादशौचादि कृत्वा संकल्प्य कव्यवाल इत्यादिना (८०पृ०) प्रेतपर्व्वत प्रकरणादर्शितेन मन्त्रेण (७६पृ०) पितॄनावाह्य तदुद्देशेन श्राद्धं पिण्डदान-

मात्रं वा यथाशक्ति कुर्य्यात्। तत्र पञ्चगव्यद्वारा शोधितस्या-न्नप्रक्षालनादिसाक्षिश्रावणान्तं (८१,८४पृ०) कृत्वा संकल्प्य प्रेतशिलायां सदाचारादेव नवभाण्डस्फोटनं कुर्य्यात्।

अथ प्रेतशिलाधःप्रभासाद्रिसङ्गतायां महानद्यां रामतीर्थत्वेन प्रसिद्धे प्रभासह्रदे देशकालादिकीर्त्तनान्ते जन्मान्तरकृतदुष्कृतविनाशकामो रामतीर्थे स्नानमहं करिष्ये इति सङ्कल्प्य प्रकृतस्नानमन्त्रान्ते

जन्मान्तरगतं सार्ग्रं यन्मया दुष्कृतं कृतम्।
तत्सर्व्वं विलयं यातु रामतीर्थाभिषेचनादिति

मन्त्रेण स्नानं विधाय पितॄन् सन्तर्प्य स्वस्य विष्णु-लोकप्राप्तिकामः पितॄणाञ्च प्रेतत्वविमुक्तिपूर्व्वकपितृपद-प्राप्तिकामो रामतीर्थे श्राद्धं, पिण्डदानमात्रमक्षय्यपिण्ड-दानमात्रं वा करिष्ये इति सङ्कल्प्य

कव्यवाल इत्याद्यावाहनादि साक्षिश्रावणान्तं(८०,८४पृ०) कुर्य्यात्। ततः स्वगतपापनाशकामः

"रामराम! महाबाहो देवानामभयङ्कर!।
त्वां नमाम्यत्र देवेश! मम नश्यतु पातकमिति"

मन्त्रेण रामं नत्वा प्रेतलोकेशञ्च प्रणमेत्। ततः मानसवाचिककायिककर्म्मजपापनाशकामः

"आपस्त्वमसि देवेश! ज्योतिषां पतिरेव च।
पापं नाशय देवेश! मनोवाक्कायकर्म्मजमिति"

मन्त्रेण प्रार्थ्य

यमराजधर्म्मराजौ निश्चलार्थं हि संस्थितौ।
ताभ्यां बलिं प्रयच्छामि पितॄणां मुक्तिहेतवे॥
इति मन्त्रेण एष कुशतिलजलमिश्रितो बलिर्यमराज-धर्म्मराजाभ्यां नम इत्युक्त्वा यमबलिं दत्त्वा
द्वौ श्वानौ श्यामशवलौ वैवस्वतकुलोद्भवौ।
ताभ्यां बलिं प्रयच्छामि रक्षेतां पथि सर्व्वदा॥
मन्त्रेण एष बलिर्यमराजधर्म्मराजानुचराभ्यां श्वभ्यां नम इति श्वबलिं दद्यात्। तच्च प्रभासाद्रिदक्षिणदिगवस्थित-प्रेतशिलाजघनस्थलगतपर्व्वते यमबलिवद्दद्यात्। यम-राजधर्म्मराजबलिदानञ्च नित्यमकरणे गयाश्राद्धानर्थक्य श्रवणात्। इति द्वितीयदिनकृत्यम्।

## अथ तृतीयदिनकृत्यम्।

फल्गुतीर्थे प्रातःस्नानादिकं कृत्वा उत्तरमानसं गत्वा दर्भपाणिस्तीर्थोदकेनाचम्य शिरस्यभ्युक्ष्य देशकालकीर्त्त-नान्ते आत्मशुद्धिसूर्य्यलोकादिप्राप्तिपितृमुक्तिकाम उत्तर मानसे स्नानं करिष्ये इति सङ्कल्प्य प्रकृतस्नानमन्त्रान्ते
उत्तरे मानसे स्नानं करोम्यात्मविशुद्धये।
सूर्य्यलोकादिसंसिद्धिसिद्धये पितृमुक्तये॥
इति मन्त्रेण स्नायात्। ततस्तर्पणान्ते
आब्रह्म स्तम्बपर्य्यन्तं देवर्षिपितृमानवाः।
तृप्यन्तु पितरः सर्व्वे मातृमातामहादयः॥
अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम्।

आ ब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकम् ॥

इत्यनेनैकोऽञ्जलिर्देयः। ततः पितॄणामक्षयतृप्तिकाम उत्तरमानसे श्राद्धं पिण्डदानमात्रं वा करिष्ये इति सङ्कल्प्य कव्यवाल(८०,८४पृ०)इत्यादिनावाहनादिसाक्षि-श्रावणान्तं कृत्वा पितॄणां सूर्य्यलोकनयनकाम उत्तरार्कस्य प्रणामं गन्धादिभिः पूजनं च करिष्ये इति सङ्कल्प्य

ओं नमो भगवते भर्त्रे सोमभौमज्ञरूपिणे।

जीवभार्गवसौरेयराह्वकेतुस्वरूपिणे ॥

इति मन्त्रेण उत्तरार्कस्य नतिपूजने कुर्य्यात्। ततो मौनेन दक्षिणमानसं गत्वा तदन्तर्गते उत्तरभागस्थे उदीचीनामतीर्थे आत्मविशुद्धिसूर्य्यलोकादिप्राप्तिब्रह्मह-त्यादिपापसमूहनाशकामः पितृमुक्तिकामो वोदीचीतीर्थे स्नानमहं करिष्ये इति सङ्कल्प्य प्रकृतस्नानमन्त्रान्ते

ब्रह्महत्यादिपापौघयातनाया विमुक्तये।

दिवाकर! करोमीह स्नानं दक्षिणमानसे।

नमामि सूर्य्यं तृप्त्यर्थं पितॄणां तारणाय च।

पुत्त्रपौत्त्रधनैश्वर्य्यायुरारोग्यवृद्धये ॥

इति मन्त्रेण दक्षिणमानसे स्नात्वा पितॄन् सन्तर्प्य पितृ मुक्तिकाम उदीचीतीर्थे श्राद्धं पिण्डदानं वा करिष्ये इति सङ्कल्प्य कव्यवाल (८०,८४पृ०) इत्यावाहनादिसाक्षिश्राव-णान्तं कुर्य्यात्। ततो दक्षिणमानसान्तर्गत एव मध्यभागस्थे कनखलतीर्थे पूर्व्वोक्तकामनया सङ्कल्पान्ते पूर्व्वोक्तमन्त्र-

द्वारा स्नात्वा तर्पणं श्राद्धं पिण्डदानमात्रं वा कार्य्यम् । ततस्तदन्तर्गत एव दक्षिणभागस्थे दक्षिणमानसे पूर्व्वोक्त-कामनयैव पूर्व्ववदेव सर्व्वं कार्य्यम् । ततः पितृगततृप्ति-तरणस्वगतपुत्रपौत्रधनैश्वर्य्यायुरारोग्यवृद्धिकामनया

"नमामि सूर्य्यं तृप्त्यर्थं पितॄणां तारणाय च ।

पुत्रपौत्रधनैश्वर्य्यायायुरारोग्यवृद्धये" ॥

इति मन्त्रेण मौनेन दक्षिणार्कस्य नतिः पूजनं च कार्य्यम् । मौनेन पूजनीयत्वादयमेव मौनार्कः । ततः कव्यवाल ( ८०, ८४५० ) इत्यादिकं पूर्व्वोक्तं मन्त्रमकार्य्ये पठेदिति नारायणपद्धतौ स्थितम् ।

ततो गदाधरपूर्व्वदेशे सर्व्वतीर्थोत्तमं फल्गुतीर्थं गत्वा पितॄणां विष्णुलोकप्राप्तये आत्मनश्च भुक्तिमुक्ति-सिद्धये फल्गुतीर्थे स्नानं करिष्य इति संकल्प्य स्नानीयप्रकृतमन्त्रान्ते

फल्गुतीर्थे विष्णुजले करोमि स्नानमादृतः ।

पितॄणां विष्णुलोकाय भुक्तिमुक्तिप्रसिद्धय इति

मन्त्रेण स्नात्वा तर्पणं कुर्य्यात् । ततः पितॄणां मोक्ष-प्राप्तिकामः फल्ग्वां श्राद्धं करिष्य इति संकल्प्य पूर्व्वव-देव श्राद्धं पिण्डदानमात्रं वा कुर्य्यात् । ततः

ओं नमः शिवाय देवाय ईशानपुरुषाय च ।

अघोरवामदेवाय सद्योजाताय शम्भवे ।

इति मन्त्रेण मधुस्रवादक्षिणकूलस्थस्य पितामहेश्वरस्य

प्रणामपूजने। ततो गदाधरपूजाङ्गतया पुनः फल्गु-तीर्थे स्नानम्। ततः पितृभिः सार्द्धमात्मनो वैष्णव-पदनयनकामनया गदाधरस्य दर्शनं, प्रणामः पञ्चामृतैः स्नपनम्।

ओं नमो वासुदेवाय नमः सङ्कर्षणाय च।

प्रद्युम्नायानिरुद्धाय श्रीधराय च विष्णवे इति

मन्त्रेण पुष्पवस्त्राद्यलङ्कारादिभिर्यथाशक्ति पूजनञ्च कार्य्यम्। इदञ्च गदाधरपूजनं नित्यमकरणे गयाश्राद्धा-नर्थक्यश्रवणात्। अत्र पञ्चतीर्थस्नानानां पितृब्रह्मलोक-नयनं वा फलम्।

इति तृतीयदिनकृत्यम्।

अथ चतुर्थदिनकृत्यम्। तत्र फल्ग्वां स्नानादि प्रातःकृत्यं कृत्वा धर्म्मारण्यं गत्वा सर्व्वपापविशुद्धिकामो मतङ्गवाप्यां स्नानं करिष्य इति सङ्कल्प्य तत्र मतङ्ग-वाप्यां स्नानं तर्पणञ्च कुर्य्यात्। ततः पितृद्धारकामनया प्रेतपर्व्वतवत् श्राद्धं पिण्डदानमात्रं वा कार्य्यम्। ततो मतङ्गवाप्युत्तरकूलस्थं मतङ्गेशं दृष्ट्वा प्रणम्य

"प्रमाणं देवताः सन्तु लोकपालाश्च साक्षिणः।

मयागत्य मतङ्गेऽस्मिन् पितृणां निष्कृतिः कृतेति"

मन्त्रः पाठ्यः। ततो ब्रह्मतीर्थसंज्ञकं ब्रह्मकूपं गत्वा पितृद्धारकामनया स्नानतर्पणश्राद्धानि पूर्व्ववत् कार्य्याणि। ततो ब्रह्मकूपयूपयोर्म्मध्ये पितृतारणकामनया प्रेतपर्व्व-

तवत् श्राद्धं पिण्डदानमात्रं वा कार्य्यम्। ततो धर्म्मस्य धर्म्मेश्वरस्य च प्रणामः। ततो महाबोधितरोरधः स्वस्य स्वर्गलोकप्राप्तिकामनया प्रेतपर्व्वतवत् श्राद्धं पिण्डदानमात्रं वा कार्य्यम्।

चलद्दलाय वृक्षाय सर्व्वदा स्थितिहेतवे।
बोधिसत्वाय यज्ञाय अश्वत्थाय नमो नमः॥
एकादशोऽसि रुद्राणां वसूनां पावकस्तथा।
नारायणोऽसि देवानां वृक्षराजोऽसि पिप्पल!॥

अश्वत्थ! यस्मात्वयि वृक्षराज!
नारायणस्तिष्ठति सर्व्वकालम्।
अतः शुभस्त्वं सततं तरूणां
धन्योऽसि दुःस्वप्नविनाशनोऽसि॥

अश्वत्थरूपिणं देवं शङ्खचक्रगदाधरम्।
नमामि पुण्डरीकाक्षं वृक्षरूपधरं हरिम्॥

इति मन्त्रेण विष्णुं प्रणमेत्। ब्रह्मकूपस्तु मतङ्गवाप्या आग्नेयकोणे आसीत् अधुनावटमात्रतया तस्य स्थितेर्न तत्र स्नानसम्भवः। इति चतुर्थदिनकृत्यम्।

अथ पञ्चमदिनकृत्यम्। तत्र फल्ग्वां प्रातःस्नानादि नित्यं कर्म्म कृत्वा ब्रह्मसरो गत्वा ऋणत्रयविमुक्तिकामः करिष्यमाणतर्पणश्राद्धपिण्डदानोपयोग्यात्म-शुद्धिकामस्त्र ब्रह्मसरसि स्नानं करिष्य इति सङ्कल्प्य प्रकृतस्नानमन्त्रान्ते

ओं स्नानं करोमि तीर्थेऽस्मिन्नृणत्रयविमुक्तये।

श्राद्धाय पिण्डदानाय तर्पणायात्मशुद्धये ॥

इति मन्त्रेण स्नानं तर्पणञ्च कुर्य्यात्। ततः पितॄणां ब्रह्मलोकनयनकामनया ब्रह्मसरसि ब्रह्मयपसमीपे श्राद्धं पितृतारणकामनया ब्रह्मकूपयूपयोर्म्मध्ये च श्राद्धं पिण्डदानमात्रं वा कार्य्यम्। ततः पितॄणां मोक्षप्राप्तिकामो ब्रह्मयूपकल्पिताम्रवृक्षसेचनमहं करिष्ये इति सङ्कल्प्य

ओं आम्र ब्रह्मसरोभूतं सर्व्वदेवमयं तरुम्।

विष्णुरूपं प्रसिञ्चामि पितॄणाञ्च विमुक्तय इति

मन्त्रावृत्त्या ब्रह्मसरःसम्भूतानुच्छिष्टोदकेन कुशयुतेन गोप्रचारसमीपस्थानाम्रानासिञ्चेत्। ततो वाजपेयफलप्राप्तिकामनया ब्रह्मयूपप्रदक्षिणां करिष्ये इति सङ्कल्प्य ब्रह्मयूपप्रदक्षिणा कार्य्या।

ओं नमो ब्रह्मणेऽजाय जगज्जन्मादिकारिणे।

भक्तानाञ्च पितॄणाञ्च तारणाय नमो नम इति

मन्त्रेण पितॄणां ब्रह्मपुरनयनकामनया ब्रह्मसरोवायव्यकोणस्थस्य ब्रह्मणो नतिः पूजा च कार्य्या। ततः पितृमुक्तये यमबलिदानं करिष्ये इति सङ्कल्प्य

ओं यमराजधर्म्मराजौ निश्चलार्थं स्थिरीकृतौ।

ताभ्यां बलिं प्रयच्छामि पितॄणां मुक्तिहेतवे।

एष बलिर्यमराजधर्म्मराजाभ्यां नम इति मन्त्रेण यज्ञोपवीतिना प्राचीनावीतिना वा सकुशोदकेन भक्तादिना ताभ्यां बलिदानम्। ततः

"द्वौ श्वानौ श्यामशबलौ वैवस्वतकुलोद्भवौ ।

ताभ्यां बलिं प्रयच्छामि स्यातामेतावहिंसकौ"

एष बलिः श्वभ्यां नम इति श्वभ्यां बलिदानम् ।

ओं ऐन्द्रवारुणवायव्या याम्या वै नैर्ऋतास्तथा ।

वायसाः प्रतिगृह्णन्तु भूमौ पिण्डं मयोज्झितमिति

मन्त्रेण काकेभ्यो बलिदानम् । ततो ब्रह्मसरस्येव काकबलिदाननिमित्ताशुचितापरिहारार्थं पुनस्तूष्णीं स्नानम् ।

इति पञ्चमदिनकृत्यम् ।

अथ षष्ठदिनकृत्यम् । तत्र दशलक्षाश्वमेधजन्यफलकामः फल्गुतीर्थे स्नानं करिष्य इति सङ्कल्प्य प्रकृतस्नानमन्त्रान्ते फल्गुतीर्थे इत्यादि (८८४०) मन्त्रेण स्नात्वा तर्पणं कृत्वा पदेषु श्राद्धानि कुर्य्यात् । तत्र यद्यपि ब्रह्म-विष्णु-रुद्र-कश्यपपदानामन्यतमपदे आरम्भसमाप्ती कार्य्ये । मध्येषु त्वनियम एव तथापि वायुपुराणपाठक्रममनुसृत्य क्रमेण श्राद्धान्युच्यन्ते ।

अद्येत्यादि आत्मनः सर्व्वपापनाशकामो विष्णुपददर्शनं करिष्य इति सङ्कल्प्य

अत्र विष्णुपदं दिव्यं दर्शनात् पापनाशनम् ।

स्पर्शनात् पूजनाच्चैव पितृणां मुक्तिहेतवे इति

मन्त्रेण विष्णुपदस्य दर्शनम्, पितृविमुक्तिकामो विष्णुपूजनं करिष्य इति सङ्कल्प्य पञ्चोपचारैर्विष्णुपूजनं कुर्य्यात् । ततः सम्बन्धविशेषमनादृत्य आत्मीयकुलसहस्र-

समुद्धारपूर्व्वकविष्णुलोकनयनकामो विष्णुपदे श्राद्धं करिष्ये इति सङ्कल्प्य कव्यवाल(८०,८४पृ०)इत्याद्यावाहनादि सान्निश्रावणान्तं कुर्य्यात्। अत्रायं भेदः पञ्चगव्यप्रक्षालनानन्तरं षोड़शभिः पञ्चभिर्वोपचारैः विष्णुं पुरुषसूक्तेन (१) तद्विष्णोः परमं पदमित्यनेन वा विष्णुं पूजयेत् एवं रुद्रादिपदेष्वपि तत्तन्मन्त्रेण तत्तद्देवतानां पूजनमधिकमिति। तत्र रुद्रपदे श्राद्धे आत्मसहितकुलशतस्य शिवपुरनयनम्। ब्रह्मपदे कुलशतसमुद्धारपूर्व्वकब्रह्मलोकनयनम्। दक्षिणाग्निपदे स्वस्य वाजपेययागफलम्। गार्हपत्यपदे स्वस्य अश्वमेधयज्ञफलम्। आवहनीयपदे स्वस्य राजसूययज्ञफलम्। सभ्याग्निपदे स्वस्य ज्योतिष्टोमफलम्। आवसथ्याग्निपदे स्वस्य सोमलोकप्राप्तिः। सूर्य्यपदे पञ्चशतकुलानां सूर्य्यपुरनयनम्। कार्त्तिकेयपदे पितॄणां शिवलोकनयनम्। इन्द्रपदे पितॄणामिन्द्रलोकप्राप्तिः। अगस्त्यपदे पितॄणां ब्रह्मलोकनयनम्। चन्द्रगणेशक्रौञ्चमातङ्गपदेषु पितॄणां ब्रह्मपुरनयनम्। कश्यपपदे पितॄणां ब्रह्मपुरनयनम्। इति सप्तदशसु पदेषु तत्तत्फलोद्देशेन श्राद्धानि कार्य्याणि तत्तद्देवानां पूजा च कार्य्या। तन्मध्ये विष्णुरुद्रब्रह्मकश्यपपदेषु श्राद्धकर्त्तुरपि मुक्तिरिति विशेषः। ततः पद-

(१) मत्कृततत्त्वादानादिपद्धतौ (११५,११६पृ० १,२,१,प०)

शिलायामेवोत्तरभागस्थायां गजकर्णिकायां पितॄणां स्वर्गनयनकामनया शुद्धोदकेन पितृतर्पणं पूर्व्वविधानेन कार्य्यम्। ततः पितॄणां तारणार्थं पदशिलोत्तरभागस्थ-मार्गसमीपस्थानां कनकेश्वरकेदारेश्वरनारसिंहवामनानां पञ्चभिरुपचारैः पूजा कार्य्या। सन्न्यासिभिस्तु गयां गत्वा विष्णुपदे दण्डस्पर्शनमात्रं कार्य्यम्।

इति षष्ठदिनकृत्यम्।

अथ सप्तदिनकृत्यम्। तत्र फल्गुतीर्थे स्नानादि प्रातःकृत्यं कृत्वा गदालोलं तीर्थं गत्वा आत्मनः शुद्धये अक्षयस्वर्गप्राप्तये च गदालोले स्नानं करिष्य इति सङ्कल्प्य

गदालोलमिति ख्यातं सर्व्वेषामुत्तमोत्तमम्॥

गदालोले महातीर्थे गदाप्रक्षालनाद्धरेः।

स्नानं करोमि तीर्थेऽस्मिन्नक्षय्य पदमाप्नुयाम्।

इति मन्त्रेण गदालोले स्नानतर्पणे कृत्वा पितृतृप्तिब्रह्म-लोकावाप्तिकामः श्राद्धं पिण्डमात्रं वा करिष्ये इति सङ्कल्प्य पूर्व्ववत् साध्यानुसारेण श्राद्धं पिण्डदानमात्रं वा कुर्य्यात्। ततोऽक्षयवटे गत्वा पितॄणां ब्रह्मलोकप्राप्ति-कामोऽक्षयवटच्छायायां श्राद्धं करिष्ये इति संकल्प्य अन्नेनैव श्राद्धं पूर्व्ववत् कृत्वा ब्रह्मकल्पितविप्रभोजनं कुर्य्यात्। ततः

एकार्णवे वटस्याग्रे यः शेते योगनिद्रया।

बालरूपधरस्तस्मै नमस्ते योगशायिने॥

इति मन्त्रेणाक्षयवटप्रणामं कृत्वा पितॄणामक्षयब्रह्मलोकप्राप्तिकामनया

संसारवृक्षशस्त्राय सर्व्वपापक्षयाय च।
अक्षयाय ब्रह्मदात्रे नमोऽक्षयवटाय ते ॥

इति मन्त्रेण अक्षयवटेश्वरप्रणामपूजने च कार्य्ये। ततः प्रपितामहरूपगदाधरपूजने तत्प्रणामौ च कार्य्यौ

इति सप्तमदिनकृत्यम्।

अथानियतदिनकृत्यानि। पूर्व्वदिने उपोष्य पराह्ने प्रातर्गयास्थगायत्रीसंमुखस्थं गायत्रीतीर्थं गत्वा तत्कूले ब्राह्मण्याविच्छेदकामनया सङ्कल्प्य प्रातः सन्ध्यावन्दनश्राद्धानि कार्य्याणि। अन्यदिने उद्यन्तनामपर्व्वतस्थिते सावित्र्याः पुरोगते समुदिततीर्थे कुलशतस्वर्गनयनकामनया सङ्कल्प्य मध्याह्नसन्ध्योपासनातर्पणश्राद्धानि कार्य्याणि। एवमेव सरस्वत्याः पुरतः प्राच्यां सरस्वत्यां सायाह्ने कुलसहस्रमुक्तिकामनया सङ्कल्प्य स्नानसायंसन्ध्योपासनाश्राद्धानि कार्य्याणि।

धर्म्मशिलायां, लेलिहाने, भरताश्रमे, मुण्डपृष्ठे, गदाधरसमीपे, आकाशगङ्गायां, गिरिकर्णमुखे च कुलशतब्रह्मलोकनयनकामनया श्राद्धं पिण्डदानमात्रं वा कार्य्यम्। वैतरण्यामेकविंशतिकुलोद्धारणकामनया स्नानतर्पणश्राद्धानि कार्य्याणि।

यमद्वारे महाघोरे या सा वैतरणी नदी।

तामहं तर्त्तुमिच्छामि कृष्णां गां प्रदहन्विमाम् ॥
इति मन्त्रेण तत्र गोदानं कार्य्यम्। देवनद्यां (वैतरण्याम्), गोप्रचारे, घृतकुल्यायां, मधुकुल्यायां, गदालोले, कोटितीर्थे, रुक्मिणीकुण्डे च पितृस्वर्गकामनया श्राद्धं पिण्डदानमात्रं वा कार्य्यम्। पितृतारणकामनया मार्कण्डेयेश्वरं कोटीश्वरं च प्रणमेत्। पितामहसन्निहितपारिजातवनस्थपाण्डुशिलायां पितॄणामक्षयतृप्तिकामनया श्राद्धं पिण्डदानमात्रं वा कार्य्यम्। घृतकुल्या मधुकुल्यादेविकामहानदी (सरस्वती) चेति चतस्रो यत्र पाण्डुशिलया मिलिताः सा मधुस्रवा तस्यां स्नानतर्पणे अश्वमेधफलके, श्राद्धं च कुलसहस्रस्य नरकादुद्धारपूर्व्वकविष्णुपुरनयनफलकम्। दशाश्वमेधे, हंसतीर्थे च पितामहादक्षिणस्यां महानद्याम्, उद्यन्तपर्व्वतसमीपस्थे ब्रह्मकुण्डे च मुक्तिकामनया स्नानं पितृतृप्तिकामनया तर्पणश्राद्धे कार्य्ये। सङ्गमे तारकेश्वरप्रणामे पितृस्वर्गः। अश्वमेधफलकामनया गयाकूपे श्राद्धम्। अत्र पतितदुर्म्मरणादिमृतानामपि स्वर्गकामनया वर्षोत्तरं श्राद्धं कार्य्यम्। पितृसन्तारणकामनया भस्मकूपे भस्मना स्नानम्। गयाग्राममध्यस्थसुपुण्यायां महाकालीसमीपे एकविंशकुलस्वर्गकामनया श्राद्धम्। गृध्रवटोत्तरभागस्थे वसिष्ठतीर्थे स्नात्वा वसिष्ठेश्वरनमनम् अश्वमेधफलकामनया कार्य्यम्। धेनुकारण्यजलाशये स्नात्वा कामधेनुं

प्रणम्य पितृब्रह्मलोकनयनकामनया कामधेनुपदे श्राद्धं कार्य्यम्। कर्दमाले, गयानाभौ, मुण्डपृष्ठसमीपे च स्नानश्राद्धे, चण्डिकाफल्गुचण्डीशमङ्गलादिग्रहनतिश्च पितृस्वर्गकामनया कार्य्याणि। गयागजे, गयादित्ये, गायत्र्यां, गदाधरसमीपे, गयायां, गयाशिरसि चेति गकारवति स्थानषट्के मुक्तिकामनया पूजापितृश्राद्धादिकञ्च कार्य्यम्। गयायां यत्र क्वापि यदा कदाचिदेकविंशतिकुलोद्धारकामनया वृषोत्सर्गः कार्य्यः। गयायामादिगदाधरं ध्यात्वा पितृणां कुलशतस्य नरकाद्युद्धारब्रह्मलोकनयनकामनया श्राद्धं पिण्डदानं वा कार्य्यम्। भस्मकूटस्थितं जनार्द्दनं नत्वा तत्समीपे वामजानु निपात्यात्मनो विष्णुलोककामनया पित्रादीनां श्राद्धं कृत्वा तञ्च षोड़शभिः पञ्चभिर्वोपचारैः संपूज्य दध्योदनं नैवेद्यं दत्त्वा तच्छेषेण तिलं विना विष्णुलोककामनया जीवत एवात्मन उद्देशेन

एष पिण्डो मया दत्तस्तव हस्ते जनार्द्दन!।
गयाशीर्षे त्वया देयो मह्यं पिण्डो मृते मयि॥

इति मन्त्रेण जनार्द्दनवामहस्ते पिण्डं दद्यात्। अग्निपुराणे तु पिण्डत्रयदानमुक्तमतस्तत्त्यम्।

"त्रयः पिण्डा मया दत्तास्तव हस्ते जनार्द्दन!।
परलोकगते मह्यमक्षय्यमुपतिष्ठताम्"॥

इत्येवं मन्त्रं पठित्वा तत्त्रयं दद्यात्। तन्नैवेद्यदध्योदनशेषेणैव तथैवान्येषां जीवतामप्युद्देशेन

एष पिण्डो मया दत्तस्तव हस्ते जनार्दन!।
देहि देव! गयाशीर्षे तस्मै तस्मिन् मृते तु तम्॥

इति मन्त्रेण पिण्डं दद्यात्। ततः

जनार्दन! नमस्तुभ्यं नमस्ते पितृरूपिणे।
पितृपते! नमस्तुभ्यं नमस्ते मुक्तिहेतवे॥
गयायां पितृरूपेण स्वयमेव जनार्दन!॥

इति मन्त्रेण तस्य प्रणामः। ऋणत्रयमुक्तिकामनया पुण्डरीकाक्षं दृष्ट्वा स्वर्गकामनया तस्य पूजा कार्य्या। तत्प्रणामे

लक्ष्मीकान्त! नमस्तेऽस्तु नमस्ते पितृमोक्षद!॥

इति मन्त्रः पाठ्यः। महानदीपरपारगतभरताश्रमसन्निधौ महानद्यां स्नात्वा रामेश्वरं, सीतासहितं रामञ्च

राम! राम! महाबाहो! देवानामभयङ्कर!।
त्वां नमस्येऽत्र देवेशं मम नश्यतु पातकम्॥

इति मन्त्रेण नत्वा तत्रस्थे रामपदे पितृकुलशतसहितस्यात्मनो विष्णुपुरगमनकामनया श्राद्धं पिण्डदानमात्रं वा कार्य्यम्। धर्म्मशिलादक्षिणहस्तस्थापितकुण्डपर्व्वते पितॄणां ब्रह्मपुरनयनकामनया श्राद्धं कार्य्यम्। धर्म्मशिलावामहस्तस्थापिते उद्यन्तपर्व्वते पितॄणां ब्रह्मप्राप्तिकामनया श्राद्धं, तत्रैवोद्यन्तकुण्डे मध्याह्ने स्नात्वा मध्याह्नसन्ध्योपासनम्, स्वस्य कोटिजन्मावधिधनाढ्यवेदवेदाङ्गपारगविप्रत्वकामनया तत्रत्यसावित्रीपूजा च कार्य्या। अगस्त्यपदे स्नात्वा देवैः पूज्यतायाः, पितृसहितस्यात्मनो

ब्रह्मलोकप्राप्तेश्च कामनया श्राद्धं कार्य्यम्। जन्मनिवारणपूर्व्वकब्रह्मभावप्राप्तिकामनया ब्रह्मयोनिं प्रविश्य ततो निर्गमनं कार्य्यम्। गयाकुमारनतौ ब्राह्मण्यलाभः। पितॄणां चन्द्रलोकप्राप्तिकामनया सोमकुण्डे स्नानतर्पणश्राद्धानि कार्य्याणि। ऋणमोक्षकामनया

यमोऽसि यमदूतोऽसि वायसोऽसि महाबल!।

सप्तजन्मकृतं पापं बलिं भुक्त्वा विनाशय॥

इति मन्त्रेण काकशिलायां काकबलिदानम्। स्वर्गप्राप्तिपूर्व्वकब्रह्मलोकगमनकामनया स्वर्ग-द्वारेशस्य प्रणामः। पितृनिष्पापतार्थं व्योमगङ्गायां श्राद्धम्। धर्म्मशिलादक्षिणहस्तगते भस्मकूटाद्रौ स्वर्गप्राप्तिकामनया तत्रत्यभस्मना स्नानम्। अक्षयवटसमीपे वटेश्वरः, प्रपितामहश्च तदग्रे रुक्मिणीकुण्डं, तत्पश्चिमतः कपिला नदी, तत्तीरे कपिलेश्वरश्चैते पूज्याः, कपिलायां सोमामायोगे स्वर्गकामनया स्नानश्राद्धे कार्य्ये। स्वर्गकामनया माहेश्वरीकुण्डे, रुक्मिणीकुण्डे च स्नानश्राद्धे कार्य्ये। स्त्रीभिः सौभाग्यकामनया माहेश्वरीकुण्डसमीपे मङ्गलागौरी पूज्या। धर्म्मशिलादक्षिणपादस्थापितप्रेतकूटाद्रौ पितृमुक्तिकामनया श्राद्धं कार्य्यम्। तत्रत्य एव प्रेतकुण्डे पितॄणां प्रेतत्वमुक्तिकामनया श्राद्धादि कार्य्यम्। पितॄणां ब्रह्मपुरप्राप्तिकामनया वैकुण्ठस्यहैमकूटपर्व्वते गयायां लौहदण्डतया ख्याते गिरौ श्राद्धं कार्य्यम्। धर्म्मशिला-

दक्षिणपादस्थगृध्रकूटगिरौ शिवपुरप्राप्तिकामनया गृध्रेश्वरदर्शनम्। स्वर्गकामनया तत्रत्यगृध्रवटप्रणामः। पितृलोकप्राप्तिकामनया तत्रत्यायां गृध्रगुहायां श्राद्धम्। तत्रत्यायां माहेश्वरीधारायां च पितृस्वर्गकामनया श्राद्धम्। ब्रह्मलोकप्राप्तिकामनया मूलक्षेत्रसरसि स्नानम्। स्वस्य शिवत्वकामनया ऋणमोक्षेश्वरपापमोक्षेश्वरदर्शनं कार्य्यम्। धर्म्मशिलायां उदरस्थादिपालस्थितस्य गजरूपिविघ्नेशस्य निजमुक्तिपितृशिवपुरप्राप्तिकामनया दर्शनं कार्य्यम्। स्वर्गकामनया स्नात्वा गायत्रीगयादित्ययोर्दर्शनं कार्य्यम्। पितृतारणकामनया तत्पर्व्वतस्थब्रह्मदर्शनम्। पितृब्रह्मपुरप्राप्तिकामनया गयानाभौ श्राद्धम्। पापनाशकामनया मुण्डपृष्ठाद्रौ रवेः इन्द्रादेश्च दर्शनम्। क्रौञ्चपादाद्रिगतजलाशये पितृमातामहश्वशुरकुलानां स्वर्गकामनया श्राद्धं कार्य्यम्। एतानि तीर्थानि प्रायशो वायुपुराणोक्तानि अग्निपुराणे तु स्वर्गद्वारसोमकुण्डवायुतीर्थाकाशगङ्गाकपिलाकादम्बिनीगयाकोटि-तीर्थाग्निधारासुषुम्णापुष्करिणी-कपिलेश्वरमार्कण्डेयेश्वरमुण्डपृष्ठस्थदेवीक्षेत्रपालबलभद्रसुभद्रापुरुषोत्तममाधवमहाकालीद्वादशादित्यकपर्दिविनायक-कार्त्तिकेय-सोमनाथाद्यष्टलिङ्गादीनि तीर्थान्युक्तानि तेषु च फलविशेषं तत एवागम्य तत्तत्कामनया स्नानतर्पणश्राद्धदर्शनपूजानतिप्रभृतीनि कार्य्याणि। ततो गयाप्रदक्षिणा कार्य्या।

ततो वित्तानुसारेण गदाधरं संपूज्य ब्रह्मकृतेन

गदाधरं कलिगतकल्मषापहं
गयागतं विदितगुणं गुणातिगम्।
गुहागतं गिरिवरगेहगोपितं
सुरार्च्चितं वरदमहं नमामि तम् ॥ १ ॥
शुभश्रियं त्रिदशगणादिसुश्रियं
यशःश्रियं दितिभयदारणश्रियम्।
कलागतं कलिमलमर्द्दनश्रियं
दृढादृढं परिदृढगाढशक्तिभिः॥
विदेहकं करणकलाविवर्ज्जितं
वियन्मरुद्दहनकरवारिभूषितम्।
गदाधरं ध्वनिसुखवर्ज्जितं परं
नमाम्यहं परममनादिदेवकम् ॥२॥　　युग्मकम्।
मनोगतं मतिगतिवर्ज्जितं त्वजं
शमात्मकं श्रुतिशिरसि स्थितं बुधम्।
चिदात्मकं कलिगतकारणातिगं
गदाधरं हृदयगतं नमाम्यहम् ॥ ३ ॥

इत्यनेन, रुद्रकृतेन च

अव्यक्तरूपो यो देवो मुण्डपृष्ठाद्रिरूपकृत्।
फल्गुतीर्थादिरूपेण तं नमामि गदाधरम् ॥१॥
व्यक्तरूपो हि यो देवो जनार्द्दनस्वरूपतः।
मुण्डपृष्ठे स्वयं ह्यस्ति तं नमामि गदाधरम् ॥२॥

शिलायां ब्रह्मरूपिण्यां स्थितं ब्रह्मादिभिः सुरैः।
पूजितं सत्कृतं देवैस्तं नमामि गदाधरम् ॥ ३ ॥
महादेवञ्च जगतो व्यक्तस्यैकं हि कारणम्।
अव्यक्तज्ञानरूपं तं नमाम्यादिगदाधरम् ॥ ४ ॥
यं च दृष्ट्वा तथा स्पृष्ट्वा पूजयित्वा प्रणम्य च।
श्राद्धादौ ब्रह्मलोकाप्तिस्तं नमामि गदाधरम् ॥ ५ ॥
देहेन्द्रियमनोबुद्धिप्राणाहङ्कारवर्ज्जितम्।
जाग्रत्स्वप्नविनिर्म्मुक्तं नमाम्यादिगदाधरम् ॥ ६ ॥
नित्यानित्यविनिर्म्मुक्तं सामान्यानन्दवर्ज्जितम्।
तुरीयं ज्योतिरात्मानं तं नमामि गदाधरम् ॥ ७ ॥

इत्यनेन स्तवेन स्तुवीत। ततः

आगतोऽस्मि गयां देव! पितृकार्य्ये गदाधर!।
त्वमेव साक्षी भगवन्ननृणोऽहमृणत्रयात् ॥

इति प्रार्थना।

एवं गयायात्रां कृत्वा स्वगृहमागत्य कृताया गयायात्रायाः परिपूरणाय गणेशस्वेष्टदेवानां पूजां विधाय अन्नोपस्करं घृतप्रधानं षड्दैवतं नवदैवतं द्वादशदैवतं वा श्राद्धं कुलाचारानुसारेण कार्य्यम्। ततः ब्राह्मणभोजनं कृत्वा दक्षिणा देया। ततः इष्टैः सह भोजनमिति

ओं तत्सत्। श्रीगदाधरः प्रीयताम्

इति श्रीतारानाथतर्कवाचस्पतिविरचिता गयाश्राद्धादिपद्धतिः समाप्ता।